त्मकेन बन्धेन विनिर्मुक्ता विशेषेणाऽऽत्यन्तिकत्वलक्षणेन निरवशेषं मुक्ताः पदं पदनीयमात्मतत्त्वमानन्दरूपं ब्रह्मानामयमविद्यातत्कार्यात्मकरोगरहितमभयं मोक्षाख्यं पुरुषार्थं गच्छन्त्यभेदेन प्राप्नुवन्तीत्यर्थः। यस्मादेवं फलकामनां त्यक्त्वा समत्वबुद्धया कर्माण्यनुतिष्ठन्तस्तैः कृतान्तः-करणशुद्धयस्तत्त्वमस्यादिप्रमाणोत्पन्नात्मतत्त्वज्ञानविनष्टाज्ञानतत्कार्याः सन्तः सकलानर्थनिवृत्तिपरमानन्दप्राप्तिरूपं मोक्षाख्यं विष्णोः परमं पदं गच्छन्ति तस्मात्त्वमपि यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्म इत्युक्तेः श्रेयोजिज्ञासुरेवंविधं कर्मयोगमनुतिष्ठेति भगवतोऽभिप्रायः ॥ ४३ ॥

एवं कर्माण्यनुतिष्ठतः कदा मे सत्त्वशुद्धिः स्यादित्यत आह—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ४४ ॥**

नह्येतावता कालेन सत्त्वशुद्धिर्भवतीति कालनियमोऽस्ति। किन्तु यदा यस्मिन् काले ते तव बुद्धिरन्तःकरणं मोहकलिलं व्यतितरिष्यति अविवेकात्मकं कालुष्यमहमिदं ममेदमित्याद्यज्ञानविलसितमतिगहनं व्यतिक्रमिष्यति रजस्तमोमलमपहाय शुद्धभावमापत्स्यत इति यावत्। तदा तस्मिन् काले श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं वैतृष्ण्यं गन्तासि प्राप्तासि। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" इति श्रुतिः। निर्वेदेन फलेनान्तःकरणशुद्धिं ज्ञास्यसीत्यभिप्रायः ॥ ४४ ॥

अन्तकरणशुद्ध्यैवं जातनिर्वेदस्य कदा ज्ञानप्राप्तिरित्यपेक्षायामाह—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ४५ ॥**

ते तव बुद्धिः श्रुतिभिर्नानाविधफलश्रवणैरविचारिततात्पर्य्यैर्विप्रतिपन्नाऽनेकविधसंशयविपर्यासवत्त्वेन विक्षिप्ता प्राक्, यदा यस्मिन् काले शुद्धिजविवेकजनितेन दोषदर्शनेन तं विक्षेपं परित्यज्य समाधौ परमात्मनि निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिताऽचला सुषुप्तिमूर्च्छास्तब्धीभावादिरूपलयलक्षणाचलनरहिता सती स्थास्यति लयविक्षेपलक्षणौ दोषौ परित्यज्य समाहिता भविष्यतीति यावत्।

अथवा निश्चलाऽसम्भावनाविपरीतभावनारहिताऽचला दीर्घकालादनैरन्तर्यसत्कारसेवनैर्विजातीयप्रत्ययादूषिता सती निर्वातप्रदीपवदात्मनि स्थास्यतीति योजना। तदा तस्मिन् काले योगं जीवपरमात्मैक्यलक्षणं तत्त्वमस्यादिवाक्यजन्यमखण्डसाक्षात्कारं सर्वयोगफलमवाप्स्यासि। तदा पुनः साध्यान्तराभावात् कृतकृत्यः स्थितप्रज्ञो भविष्यसीत्यभिप्रायः ॥ ४५ ॥

एवं लब्धावसरः स्थितप्रज्ञलक्षणं ज्ञातुमर्जुन उवाच। तान्येव हि जीवन्मुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षोपायभूतानीति मन्वानः—

**अर्जुन उवाच—**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव !**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ४६ ॥**

स्थिता निश्चलाऽहंब्रह्मास्मीति प्रज्ञा यस्य स स्थितप्रज्ञोऽवस्थाद्वयवान् समाधिस्थो व्युत्थितचित्तश्चेति । अतो विशिनष्टि समाधिस्थस्य स्थितप्रज्ञस्य का भाषा । कर्मणि षष्ठी । भाष्यतेऽनयेति भाषा लक्षणं समाधिस्थः स्थितप्रज्ञः केन लक्षणेनान्यैर्व्यवह्रियत इत्यर्थः । स च व्युत्थितचित्तः स्थितधीः स्थितप्रज्ञः स्वयं किं प्रभाषेत स्तुतिनिन्दादावभिनन्दनद्वेषादिलक्षणं किं कथं प्रभाषते । सर्वत्र सम्भावनायां लिङ् । तथा किमासीतेति व्युत्थितचित्तनिग्रहाय कथं बहिरिन्द्रियाणां निग्रहं करोति । तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान् प्राप्नोति । तत्कर्तृकभाषणासनव्रजनानि मूढजनविलक्षणानि कीदृशानीत्यर्थः । तदेवं चत्वारः प्रश्नाः । समाधिस्थे स्थितप्रज्ञ एकः, व्युत्थिते स्थितप्रज्ञे त्रय इति । केशवेति सम्बोधयन् सर्वान्तर्यामितया त्वमेवैतादृशं रहस्यं वक्तुं समर्थोऽसीति सूचयति ॥ ४६ ॥

एतेषां चतुर्णां प्रश्नानां क्रमेणोत्तरं भगवानुवाच यावदध्यायसमाप्ति—

**श्रीभगवानुवाच—**

**प्रजहाति यदा कामान् सर्वान्पार्थ ! मनोगतान् ।**
**आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ४७ ॥**

कामान् कामसङ्कल्पादीन् मनोवृत्तिविशेषान् प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदेन तन्त्रान्तरे पञ्चधा प्रपञ्चितान्सर्वान्निरवशेषान् प्रकर्षेण कारणबाधेन यदा जहाति परित्यजति सर्ववृत्तिशून्य एव यदा भवति स्थितप्रज्ञस्तदोच्यते समाधिस्थ इति शेषः ।

कामानामनात्मधर्मत्वेन परित्यागयोग्यतामाह—**मनोगतान्**इति । यदि ह्यात्मधर्माः स्युस्तदा न त्यक्तुं शक्येरन् वह्न्यौष्ण्यवत् स्वाभाविकत्वात् । मनसस्तु धर्मा एते । अतस्तत्परित्यागेन परित्यक्तुं शक्या एवेत्यर्थः । ननु स्थितप्रज्ञस्य मुखप्रसादलिङ्गगम्यः सन्तोषविशेषः प्रतीयते स कथं सर्वकामपरित्यागे स्यादित्यत आह—आत्मन्येव परमानन्दरूपे न त्वनात्मनि तुच्छ आत्मना स्वप्रकाशचिद्रूपेण भासमानेन न तु वृत्त्या तुष्टः परितृप्तः परमपुरुषार्थलाभात् । तथा च श्रुतिः—

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इति ।

तथा च समाधिस्थः स्थितप्रज्ञ एवंविधैर्लक्षणवादिभिः शब्दैर्भाष्यत इति प्रथमप्रश्नस्योत्तरम् ॥ ४७ ॥

इदानीं व्युत्थितस्य स्थितप्रज्ञस्य भाषणोपवेशनगमनानि मूढजनविलक्षणानि व्याख्येयानि । तत्र किं प्रभाषेतेत्यस्योत्तरमाह द्वाभ्याम्—

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ४८ ॥**

दुःखानि त्रिविधानि शोकमोहज्वरशिरोरोगादिनिमित्तान्याध्यात्मिकानि व्याघ्रसर्पादिप्रयुक्तान्याधिभौतिकानि अतिवातातिवृष्ट्यादिहेतुकान्याधिदैविकानि तेषु दुःखेषु रजःपरिणामसन्तापात्मकचित्तवृत्तिविशेषेषु प्रारब्धपापकर्मप्रापितेषु नोद्विग्नं दुःखपरिहाराक्षमतया व्याकुलं न भवति मनो

यस्य सोऽनुद्विग्नमनाः। अविवेकिनो हि दुःखप्राप्तौ सत्यामहो पापोऽहं धिङ् मां दुरात्मानेमतादृश-दुःखभागिनं को मे दुःखमीदृशं निराकुर्यादित्यनुतापात्मको भ्रान्तिरूपस्तामसश्चित्तवृत्तिविशेष उद्वेगाख्यो जायते। यद्ययं पापानुष्ठानसमये स्यात्तदा तत्प्रवृत्तिप्रतिबन्धकत्वेन सफलः स्यात्। भोगकाले तु भवन् कारणे सति कार्यस्योच्छेत्तुमशक्यत्वान्निष्प्रयोजने दुःखकारणे सत्यपि किमिति मम दुःखं जायते इत्यविवेकजभ्रमरूपत्वान्न विवेकिनः स्थितप्रज्ञस्य संभवति। दुःखमात्रं हि प्रारब्ध-कर्मणा प्राप्यते न तु तदुत्तरकालीनो भ्रमोऽपि। ननु दुःखान्तरकारणत्वात्सोऽपि प्रारब्धकर्मान्त-रेण प्राप्यतामिति चेत्, न स्थितप्रज्ञस्य भ्रमोपादानाज्ञाननाशेन भ्रमासम्भवात्तज्जन्यदुःखप्रापकप्रार-ब्धाभावात्। यथाकथञ्चिद् देहयात्रामात्रनिर्वाहकप्रारब्धकर्मफलस्य भ्रमाभावेऽपि बाधितानुवृत्त्यो-पपत्तेरिति विस्तरेणाग्रे वक्ष्यते। तथा सुखेषु सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेषेषु त्रिविधेषु प्रारब्धपुण्यकर्मप्रापितेषु विगतस्पृह आगामितज्जातीयसुखस्पृहारहितः। स्पृहा हि नाम सुखानुभव-काले तज्जातीयसुखस्य कारणं धर्ममननुष्ठाय वृथैव तदाकाङ्क्षारूपा तामसी चित्तवृत्तिभ्रान्तिरेव। सा चाविवेकिन एव जायते। नहि कारणाभावे कार्यं भवितुमर्हति। अतो यथा सति कारणे कार्यं मा भूदिति वृथाकाङ्क्षारूप उद्वेगो विवेकिनो न सम्भवति तथैवासति कारणे कार्यं मा भूदिति वृथाकाङ्क्षारूपा तृष्णात्मिका स्पृहाऽपि नोपपद्यते प्रारब्धकर्मणः सुखमात्रप्रापकत्वात्। हर्षात्मिका वा चित्तवृत्तिः स्पृहाशब्देनोक्ता। साऽपि भ्रान्तिरेव—अहो धन्योऽहं यस्य ममेदृशं सुखमुपस्थितं को वा मया तुल्यस्त्रिभुवने केन वोपायेन ममेदृशं सुखं न विच्छिद्येतेत्येवमात्मिकोत्फुल्लतारूपा तामसी चित्तवृत्तिः। अतएवोक्तं भाष्ये—

"नाग्निरिवेन्धनाद्याधाने यः सुखान्यनुविवर्धते स विगतस्पृहः" इति वक्ष्यति च—"न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम्" इति। रागः शोभनाध्यासनिबन्धनो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषोऽत्यन्ताभिनिवेशरूपः, रागविषयस्य नाशके समुपस्थिते तन्निवारणासा-मर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयम्। एवं रागविषयविनाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्याभिज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधः। ते सर्वे विपर्ययरूपत्वाद् विगता यस्मात् स तथा। एतादृशो मुनिर्मननशीलः संन्यासी स्थितप्रज्ञ उच्यते। एवंलक्षणः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिस्पृहत्वादिवाचः प्रभाषत इत्यन्वय उक्तः। एवं चान्योऽपि मुमुक्षुर्दुःखे नोद्विजेत् सुखे न प्रहृष्येत्, रागभयक्रोधरहितश्च भवेदित्य-भिप्रायः॥ ४८॥

किञ्च—

**यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम्।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥ ४९॥**

सर्वदेहेषु जीवनादिष्वपि यो मुनिरनभिस्नेहः, यस्मिन् सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारो-प्यैते स तादृशोऽन्यविषयः प्रेमापरपर्यायस्तामसो वृत्तिविशेषः स्नेहः सर्वप्रकारेण तद्रहितोऽनभि-स्नेहः। भगवति परमात्मनि तु सर्वथाऽभिस्नेहवान् भवेदेव, अनात्मस्नेहाभावस्य तदर्थत्वादिति

द्रष्टव्यम् । तत्तत् प्रारब्धकर्मपरिप्रापितं शुभं सुखहेतुं विषयं प्राप्य नाभिनन्दति हर्षविशेषपुरस्सरं न प्रशंसति । अशुभं दुःखहेतुं विषयं प्राप्य न द्वेष्टि अन्तरसूयापूर्वकं न निन्दति । अज्ञस्य हि सुखहेतुर्यः स्वकलत्रादिः स शुभो विषयस्तद्गुणकथनादिप्रवर्तिका धीवृत्तिर्भ्रान्तिरूपाऽभिनन्दः । स च तामसः, तद्गुणकथनादेः परप्ररोचनार्थत्वाभावेन व्यर्थत्वात् । एवमसूयोत्पादनेन दुःखहेतुः परकीयविद्याप्रकर्षादिरेनं प्रत्यशुभो विषयस्तन्निन्दादिप्रवर्तिका भ्रान्तिरूपा धीवृत्तिर्द्वेषः । सोऽपि तामसः, तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात् । तावभिनन्दद्वेषौ भ्रान्तिरूपौ तामसौ कथमभ्रान्ते शुद्धसत्त्वे स्थितप्रज्ञे सम्भवतां तस्माद् विचालकाभावात्तस्यानभिस्नेहस्य हर्षविषादरहितस्य मुनेः प्रज्ञा परमात्मतत्त्वविषया प्रतिष्ठिता फलपर्यवसायिनी स स्थितप्रज्ञ इत्यर्थः । एवमन्योऽपि मुमुक्षुः सर्वत्रानभिस्नेहो भवेत् । शुभं प्राप्य न प्रशंसेत, अशुभं प्राप्य न निन्देदित्यभिप्रायः । अत्र च निन्दाप्रशंसादिरूपा वाचो न प्रभाषेतेति व्यतिरेक उक्तः ॥ ४९ ॥

इदानीं किमासीतेति प्रश्नस्योत्तरं वक्तुमारभते भगवान् षड्भिः श्लोकैः । तत्र प्रारब्धकर्मवशाद् व्युत्थानेन विक्षिप्तानीन्द्रियाणि पुनरुपसंहृत्य समाध्यर्थमेव स्थितप्रज्ञस्योपवेशनमिति दर्शयितुमाह—

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५० ॥**

अयं व्युत्थितः सर्वशः सर्वाणीन्द्रियाणीन्द्रियार्थेभ्यः शब्दादिभ्यः । चः पुनरर्थे । यदा संहरते पुनरुपसंहरति सङ्कोचयति । तत्र दृष्टान्तः कूर्मोऽङ्गानीव । तदा तस्य प्रज्ञा प्रतिष्ठितेति स्पष्टम् । पूर्वश्लोकाभ्यां व्युत्थानदशायामपि सकलतामसवृत्त्यभाव उक्तः । अधुना तु पुनः समाध्यवस्थायां सकलवृत्त्यभाव इति विशेषः ॥ ५० ॥

ननु मूढस्यापि रोगादिवशाद् विषयेभ्य इन्द्रियाणामुपसंहरणं भवति तत् कथं तस्य प्रज्ञा प्रतिष्ठितेत्युक्तमत आह—

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५१ ॥**

निराहारस्येन्द्रियैर्विषयानाहरतो देहिनो देहाभिमानवतो मूढस्यापि रोगिणः काष्ठतपस्विनो वा विषयाः शब्दादयो विनिवर्तन्ते किन्तु रसवर्जं रसस्तृष्णा तं वर्जयित्वा । अज्ञस्य विषया निवर्तन्ते तद्विषयो रागस्तु न निवर्तत इत्यर्थः । अस्य तु स्थितप्रज्ञस्य परं पुरुषार्थं दृष्ट्वा तदेवाहमस्मीति साक्षात्कृत्य स्थितस्य रसोऽपि क्षुद्रसुखरागोऽपि निवर्तते । अपिशब्दाद् विषयश्च । तथा च यावानथ इत्यादौ व्याख्यातम् । एवं च सरागविषयनिवृत्तिः स्थितप्रज्ञलक्षणमिति न मूढे व्यभिचार इत्यर्थः । यस्मान्नासति परमात्मसम्यग्दर्शने सरागविषयोच्छेदस्तस्मात् सरागविषयोच्छेदिकायाः सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं महता यत्नेन सम्पादयेदित्यभिप्रायः ॥ ५१ ॥

तत्र प्रज्ञास्थैर्ये बाह्येन्द्रियनिग्रहो मनोनिग्रहश्चासाधारणं कारणं तदुभयाभावे प्रज्ञानाशदर्शनादिति

वक्तुं बाह्येन्द्रियनिग्रहाभावे प्रथमं दोषमाह—

**यततो ह्यपि कौन्तेय ! पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ५२ ॥**

हे कौन्तेय ! यततो भूयो भूयो विषयदोषदर्शनात्मकं यत्नं कुर्वतोऽपि, चक्षिङो ङित्त्वकरणादनुदात्ततोऽनावश्यकमात्मनेपदमिति ज्ञापनात् परस्मैपदमविरुद्धम् । विपश्चितोऽत्यन्तविवेकिनोऽपि पुरुषस्य मनः क्षणमात्रं निर्विकारं कृतमपीन्द्रियाणि हरन्ति विकारं प्रापयन्ति । ननु विरोधिनि विवेके सति कुतो विकारप्राप्तिस्तत्राऽऽह—प्रमाथीनि प्रमथनशीलानि अतिबलीयस्त्वाद् विवेकोपमर्दनक्षमाणि । अतः प्रसभं प्रसह्य बलात्कारेण पश्यत्येव विपश्चिति स्वामिनि विवेके च रक्षके सति सर्वप्रमाथित्वादेवेन्द्रियाणि विवेकजप्रज्ञायां प्रविष्टं मनस्ततः प्रच्याव्य स्वविषयाविष्टत्वेन हरन्तीत्यर्थः । हिशब्दः प्रसिद्धिं द्योतयति । प्रसिद्धो ह्ययमर्थो लोके यथा प्रमाथिनो दस्यवः प्रसभमेव धनिनं धनरक्षकं चाभिभूय तयोः पश्यतोरेव धनं हरन्ति तथेन्द्रियाण्यपि विषयसन्निधाने मनो हरन्तीति ॥ ५२ ॥

एवं तर्हि तत्र कः प्रतीकार इत्यत आह—

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५३ ॥**

तानीन्द्रियाणि सर्वाणि ज्ञानकर्मसाधनभूतानि संयम्य वशीकृत्य युक्तः समाहितो निगृहीतमनः सन्नासीत निर्व्यापारस्तिष्ठेत् । प्रमाथिनां कथं स्ववशीकरणमिति चेत्तत्राह—**मत्पर** इति । अहं सर्वात्मा वासुदेव एव पर उत्कृष्ट उपादेयो यस्य स मत्पर एकान्तमद्भक्त इत्यर्थः । तथा चोक्तम्—"न वासुदेवभक्तानामशुभं विद्यते क्वचित्" इति । यथा हि लोके बलवन्तं राजानमाश्रित्य दस्यवो निगृह्यन्ते राजाश्रितोऽयमिति ज्ञात्वा च स्वयमेव तद्वश्या भवन्ति तथैव सर्वान्तर्यामिनमाश्रित्य तत्प्रभावेणैव दुष्टानीन्द्रियाणि निग्राह्याणि पुनश्च भगवदाश्रितोऽयमिति मत्वा तानि तद्वश्यान्येव भवन्तीति भावः । यथा च भगवद्भक्तेर्महाप्रभावत्वं तथा विस्तरेणाग्रे व्याख्यास्यामः । इन्द्रियवशीकारे फलमाह—**वशे ही**ति । स्पष्टम् । तदेतद् वशीकृतेन्द्रियः सन्नासीतेति प्रश्नस्योत्तरमुक्तं भवति ॥ ५३ ॥

ननु मनसो बाह्येन्द्रियप्रवृत्तिद्वाराऽनर्थहेतुत्वं निगृहीतबाह्येन्द्रियस्य तूत्खातदंष्ट्रोरगवन्मनस्यनिगृहीतेऽपि न काऽपि क्षतिर्बाह्योद्योगाभावेनैव कृतकृत्यत्वादतो युक्त आसीतेति व्यर्थमुक्तमित्याशङ्क्य निगृहीतबाह्येन्द्रियस्यापि युक्तत्वाभावे सर्वानर्थप्राप्तिमाह द्वाभ्याम्—

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात् सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ५४ ॥**
**क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ५५ ॥**

निगृहीतबाह्येन्द्रियस्यापि शब्दादीन् विषयान् ध्यायतो मनसा पुनः पुनश्चिन्तयतः पुंसस्तेषु

सङ्ग आसङ्गो ममात्यन्तं सुखहेतव एत इत्येवं शोभनाध्यासलक्षणः प्रीतिविशेष उपजायते । सङ्गात् सुखहेतुत्वज्ञानलक्षणात् सञ्जायते कामो ममैते भवन्त्विति तृष्णाविशेषः । तस्मात् कामात् कुतश्चित् प्रतिहन्यमानात्तत्प्रतिघातकविषयः क्रोधोऽभिज्वलनात्माऽभिजायते । क्रोधाद् भवति संमोहः कार्याकार्यविवेकाभावरूपः । सम्मोहात् स्मृतिविभ्रमः स्मृतेः शास्त्राचार्योपदिष्टार्थानुसन्धानस्य विभ्रमो विचलनं विभ्रंशः । तस्माच्च स्मृतिभ्रंशाद् बुद्धेरैकात्म्याकारमनोवृत्तेर्नाशो विपरीतभावनोपचयदोषेण प्रतिबन्धादनुत्पत्तिरुत्पन्नायाश्च फलायोग्यत्वेन विलयः । बुद्धिनाशात् प्रणश्यति तस्याश्च फलभूताया बुद्धेर्विलोपात् प्रणश्यति सर्वपुरुषार्थायोग्यो भवति । यो हि पुरुषार्थायोग्यो जातः स मृत एवेति लोके व्यवह्रियते । अतः प्रणश्यतीत्युक्तम् । यस्मादेवं मनसो निग्रहाभावे निगृहीतबाह्येन्द्रियस्यापि परमानर्थप्राप्तिस्तस्मान्महता प्रयत्नेन मनो निगृह्णीयादित्यभिप्रायः । अतो युक्तमुक्तं तानि सर्वाणि संयम्य युक्त आसीतेति ॥ ५४–५५ ॥

मनसि निगृहीते तु बाह्येन्द्रियनिग्रहाभावेऽपि न दोष इति वदन् किं व्रजेतेत्यस्योत्तरमाहाष्टभिः—

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ५६ ॥**

योऽसमाहितचेताः बाह्येन्द्रियाणि निगृह्यापि रागद्वेषदुष्टेन मनसा विषयांश्चिन्तयन् पुरुषार्थाद् भ्रष्टो भवति । विधेयात्मा, तुशब्दः पूर्वस्मात् व्यतिरेकार्थः । वशीकृतान्तःकरणस्तु आत्मवश्यैर्मनोऽधीनैः स्वाधीनैरिति वा रागद्वेषाभ्यां वियुक्तैर्विरहितैरिन्द्रियैः श्रोत्रादिभिर्विषयान्शब्दादीननिषिद्धांश्चरन्नुपलभमानः प्रसादं प्रसन्नतां चित्तस्य स्वच्छतां परमात्मसाक्षात्कारयोग्यतामधिगच्छति । रागद्वेषप्रयुक्तानीन्द्रियाणि दोषहेतुतां प्रतिपद्यन्ते । मनसि स्ववशे तु न रागद्वेषौ । तयोरभावे च न तदधीनेन्द्रियप्रवृत्तिः । अवर्जनीयतया तु विषयोपलम्भो न दोषमावहतीति न शुद्धिव्याघात इति भावः । एतेन विषयाणां स्मरणमपि चेदनर्थकारणं सुतरां तर्हि भोगस्तेन जीवनार्थं विषयान् भुञ्जानः कथमनर्थं न प्रतिपद्येतेति शङ्का निरस्ता । स्वाधीनैरिन्द्रियैर्विषयान् प्राप्नोतीति च किं व्रजेतेति प्रश्नस्योत्तरमुक्तं भवति ॥ ५६ ॥

प्रसादमधिगच्छतीत्युक्तं तत्र प्रसादे सति किं स्यादित्युच्यते—

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ५७ ॥**

चित्तस्य प्रसादे स्वच्छत्वरूपे सति सर्वदुःखानामाध्यात्मिकादीनामज्ञानविलसितानां हानिर्विनाशोऽस्य यतेरुपजायते । हि यस्मात् प्रसन्नचेतसो यतेराशु शीघ्रमेव बुद्धिर्ब्रह्मात्मैक्याकारा पर्यवतिष्ठते परि समन्तादवतिष्ठते स्थिरा भवति विपरीतभावनादिप्रतिबन्धाभावात् । ततश्च प्रसादे सति बुद्धिपर्यवस्थानं ततस्तद्विरोध्यज्ञाननिवृत्तिः । ततस्तत्कार्यसकलदुःखहानिरिति क्रमेऽपि प्रसादे यत्नाधिक्याय सर्वदुःखहानिकरत्वकथनमिति न विरोधः ॥ ५७ ॥

इममेवार्थं व्यतिरेकमुखेन द्रढयति—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ५८ ॥**

अयुक्तस्याजितचित्तस्य बुद्धिरात्मविषया श्रवणमननाख्यवेदान्तविचारजन्या नास्ति नोत्पद्यते । तद्बुद्ध्यभावे न चायुक्तस्य भावना निदिध्यासनात्मिका विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपा । सर्वत्र नञोऽस्तीत्यनेनान्वयः । न चाभावयत आत्मानं शान्तिः सकार्याविद्यानिवृत्तिरूपा वेदान्तवाक्यजन्या ब्रह्मात्मैक्यसाक्षात्कृतिः । अशान्तस्याऽऽत्मसाक्षात्कारशून्यस्य कुतः सुखं मोक्षानन्द इत्यर्थः ॥ ५८ ॥

अयुक्तस्य कुतो नास्ति बुद्धिरित्यत आह--

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ५९ ॥**

चरतां स्वविषयेषु प्रवर्तमानानामवशीकृतानामिन्द्रियाणां मध्ये यदेकमपीन्द्रियमनुलक्षीकृत्य मनो विधीयते प्रेर्यते प्रवर्तत इति यावत् । कर्मकर्तरि लकारः । तदिन्द्रियमेकमपि मनसाऽनुसृतमस्य साधकस्य मनसो वा प्रज्ञामात्मविषयां शास्त्रीयां हरति अपनयति मनसस्तद्विषयाविष्टत्वात् । यदैकमपीन्द्रियं प्रज्ञां हरति तदा सर्वाणि हरन्तीति किमु वक्तव्यमित्यर्थः । दृष्टान्तस्तु स्पष्टः । अम्भस्येव वायोर्नौकाहरणसामर्थ्यं न भुवीति सूचयितुमम्भसीत्युक्तम् । एवं दार्ष्टान्तिकेऽप्यम्भःस्थानीये मनश्चाञ्चल्ये सत्येव प्रज्ञाहरणसामर्थ्यमिन्द्रियस्य न तु भूस्थानीये मनःस्थैर्ये इति सूचितम् ॥ ५९ ॥

हि यस्मादेवम्—

**तस्माद् यस्य महाबाहो ! निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६० ॥**

सर्वशः सर्वाणि समनस्कानि । हे महाबाहो, इति सम्बोधयन् सर्वशत्रुनिवारणक्षमत्वादिन्द्रियशत्रुनिवारणेऽपि त्वं क्षमोऽसीति सूचयति । स्पष्टमन्यत् । तस्येति सिद्धस्य साधकस्य च परामर्शः । इन्द्रियसंयमस्य स्थितप्रज्ञं प्रति लक्षणत्वस्य मुमुक्षुं प्रति प्रज्ञासाधनत्वस्य चोपसंहरणीयत्वात् ॥ ६० ॥

तदेवं मुमुक्षुणा प्रज्ञास्थैर्याय प्रयत्नपूर्वकमिन्द्रियसंयमः कर्तव्य इत्युक्तं स्थितप्रज्ञस्य तु स्वतःसिद्ध एव सर्वेन्द्रियसंयम इत्याह—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६१ ॥**

या वेदान्तवाक्यजनितसाक्षात्काररूपाऽहं ब्रह्मास्मीति प्रज्ञा सर्वभूतानामज्ञानां निशेव निशा तान्प्रत्यप्रकाशरूपत्वात् । तस्यां ब्रह्मविद्यालक्षणायां सर्वभूतनिशायां जागर्ति अज्ञाननिद्रायाः प्रबुद्धः सन् सावधानो वर्तते संयमीन्द्रियसंयमवान् स्थितप्रज्ञ इत्यर्थः । यस्यां तु द्वैतदर्शनलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रति स्वप्नवद् व्यवहरन्ति सा निशा न प्रकाशत आत्मतत्त्वं

पश्यतोऽपरोक्षतया मुनेः स्थितप्रज्ञस्य । यावद्धि न प्रबुध्यते तावदेव स्वप्नदर्शनं बोधपर्यन्तत्वाद् भ्रमस्य । तत्त्वज्ञानकाले तु न भ्रमनिमित्तः कश्चिद् व्यवहारः । तदुक्तं वार्तिककारैः—

"कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते ।
शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा ॥
काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनोः ।
या निशा सर्वभूतानामित्यवोचत् स्वयं हरिः ॥"

तथा च यस्य विपरीतदर्शनं तस्य न वस्तुदर्शनं विपरीतदर्शनस्य वस्त्वदर्शनजन्यत्वात् । यस्य च वस्तुदर्शनं तस्य न विपरीतदर्शनं विपरीतदर्शनकारणस्य वस्त्वदर्शनस्य वस्तुदर्शनेन बाधितत्वात् । तथा च श्रुतिः "यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत् पश्येत् । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति विद्याविद्ययोर्व्यवस्थामाह । यथा काकस्य रात्र्यन्धस्य दिनमुलूकस्य दिवान्धस्य निशा रात्रौ पश्यतश्चोलूकस्य यद्दिनं रात्रिरेव सा काकस्येति महदाश्चर्यमेतत् । अतस्तत्त्वदर्शिनः कथमाविद्यकक्रियाकारकादिव्यवहारः स्यादिति स्वतः सिद्ध एव तस्येन्द्रियसंयम इत्यर्थः ॥ ६१ ॥

एतादृशस्य स्थितप्रज्ञस्य सर्वविक्षेपशान्तिरप्यर्थसिद्धेति सदृष्टान्तमाह—

**आपूर्यमाणचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥६२॥**

सर्वाभिर्नदीभिरापूर्यमाणं सन्तं वृष्ट्यादिप्रभवा अपि सर्वा आपः समुद्रं प्रविशन्ति । कीदृशमचलप्रतिष्ठमनतिक्रान्तमर्यादम् । अचलानां मैनाकादीनां प्रतिष्ठा यस्मिन्निति वा गाम्भीर्यातिशय उक्तः । यद्वद् येन प्रकारेण निर्विकारत्वेन तद्वत्तेनैव निर्विकारत्वप्रकारेण यं स्थितप्रज्ञं निर्विकारमेव सन्तं कामा अज्ञैर्लोकैः काम्यमानाः शब्दाद्याः सर्वे विषया अवर्जनीयतया प्रारब्धकर्मवशात् प्रविशन्ति न तु विकर्तुं शक्नुवन्ति । स महासमुद्रस्थानीयः स्थितप्रज्ञः शान्तिं सर्वलौकिकालौकिककर्मविक्षेपनिवृत्तिं बाधितानुवृत्ताविद्याकार्यनिवृत्तिं चाऽऽप्नोति ज्ञानबलेन । न कामकामी कामान् विषयान् कामयितुं शीलं यस्य स कामकाम्यज्ञः शान्तिं व्याख्यातां नाप्नोति । अपि तु सर्वदा लौकिकालौकिककर्मविक्षेपेण महति क्लेशार्णवे मग्नो भवतीति वाक्यार्थः । एतेन ज्ञानिन एव फलभूतो विद्वत्संन्यासस्तस्यैव च सर्वविक्षेपनिवृत्तिरूपा जीवन्मुक्तिर्दैवाधीनविषयभोगेऽपि निर्विकारतेत्यादिकमुक्तं वेदितव्यम् ॥ ६२ ॥

यस्मादेवं तस्मात् प्राप्तानपि—

**विहाय कामान् यः सर्वान्पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ६३॥**

सर्वान् बाह्यान् गृहक्षेत्रादीनान्तरान्मनोराज्यरूपान् वासनामात्ररूपांश्च पथि गच्छतस्तृणस्पर्शरूपान् कामांस्त्रिविधान् विहायोपेक्ष्य शरीरजीवनमात्रेऽपि निस्पृहः सन् । यतो निरहङ्कारः शरीरेन्द्रियादावयमहमित्यभिमानशून्यः, विद्यावत्त्वादिनिमित्तात्मसम्भावनारहित इति वा । अतो

निर्ममः शरीरयात्रामात्रार्थेऽपि प्रारब्धकर्माक्षिप्ते कौपीनाच्छादनादौ ममेदमित्यभिमानवर्जितः सन् यः पुमांश्चरति प्रारब्धकर्मवशेन भोगान् भुङ्क्ते यादृच्छिकतया यत्र क्वापि गच्छतीति वा। स एवंभूतः स्थितप्रज्ञः शान्तिं सर्वसंसारदुःखोपरमलक्षणामविद्यातत्कार्यनिवृत्तिमधिगच्छति ज्ञानबलेन प्राप्नोति। तदेतदीदृशं व्रजनं स्थितप्रज्ञस्येति चतुर्थप्रश्नस्योत्तरं परिसमाप्तम् ॥ ६३ ॥

तदेवं चतुर्णां प्रश्नानामुत्तरव्याजेन सर्वाणि स्थितप्रज्ञलक्षणानि मुमुक्षुकर्तव्यतया कथितानि। सम्प्रति कर्मयोगफलभूतां साङ्ख्यनिष्ठां फलेन स्तुवन्नुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ६४ ॥**

**इति श्रीमद्भगवद्गीतायां सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥**

एषा स्थितप्रज्ञलक्षणव्याजेन कथिता, एषा तेऽभिहिता साङ्ख्ये बुद्धिरिति च प्रागुक्ता स्थितिर्निष्ठा सर्वकर्मसंन्यासपूर्वकपरमात्मज्ञानलक्षणा ब्राह्मी ब्रह्मविषया हे पार्थैनां स्थितिं प्राप्य यः कश्चिदपि पुनर्न विमुह्यति। नहि ज्ञानबाधितस्याज्ञानस्य पुनः सम्भवोऽस्ति अनादित्वेनोत्पत्त्यसम्भवात्। अस्यां स्थितावन्तकालेऽपि अन्त्येऽपि वयसि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं ब्रह्मरूपं निर्वाणमिति वा, ऋच्छति गच्छत्यभेदेन। किमु वक्तव्यं यो ब्रह्मचर्यादेव संन्यस्य यावज्जीवमस्यां ब्राह्म्यां स्थितावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीत्यपिशब्दार्थः ॥ ६४ ॥

ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलम्।
तत्फलं ज्ञाननिष्ठैवेत्यध्यायेऽस्मिन् प्रकीर्तितम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्य-
श्रीमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां
सर्वगीतार्थसूत्रणं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

# अथ महाकव्यश्वघोषविरचिते

## बुद्धचरिते तृतीयः सर्गः ।

**ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि ।**
**शुश्राव पद्माकरमण्डितानि गीतैर्निबद्धानि स काननानि ॥ १ ॥**

अथ सर्वार्थसिद्धस्य वैराग्योत्पत्तिं दर्शयितुं तदङ्गतया तदीयोद्यानविहारजिगमिषां प्रस्तौति——तत इति । ततः सुतोत्पत्त्यनन्तरं प्रसादसुखानुभवोत्तरं वा कदाचित् कस्मिंश्चित्काले मृदुशाद्वलानि मृदूनि कोमलानि शाद्वलानि हरिततृणाच्छन्नाः प्रदेशा येषु तानि, शादो बालतृणमस्ति यत्र तच्छाद्वलम्, नडशादाड् वलच्' ( पा० ४. २. २४ ) इति वलच्प्रत्ययः । 'शाद्वलं शादहरिते' इत्यमरः । 'शादः कर्दमशष्पयोः' इति विश्वः । लोपधशब्दानां क्लीबत्वाभिधानाच्छाद्वलशब्दस्य क्लीबत्वम् । तथाहि शय्या शाद्वलमिति हर्षः । पुंस्कोकिलोन्नादितपादपानि पुमांसश्च ते कोकिलाश्चेति पुंस्कोकिलास्तैरुन्नादिताः शब्दिताः पादपा वृक्षा येषु तानि । पुंस्कोकिल इत्यत्र पुमः खय्यम्परे ( पा० ८. ३. ६. ) इति रुः । सम्पुंकानामिति सः । अत्र प्रागल्भ्यद्योतनाय पुंस्त्वोक्तिः । तेन कामोद्दीपकत्वं व्यज्यते । पद्माकरमण्डितानि पद्मानामाकराः पद्माकरास्तडागाः, तैर्मण्डितानि विभूषितानि । गीतैर्निबद्धानि पक्षिरुतैर्युक्तानि काननानि वनानि काननभूमेर्वर्णनानीत्यर्थः । शुश्राव । अत्र सर्गे उपजातिवृत्तम् । विशेषस्तु वक्ष्यते ॥ १ ॥

**श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम् ।**
**बहिःप्रयाणाय चकार बुद्धिमन्तर्गृहे नाग इवावरुद्धः ॥ २ ॥**

श्रुत्वेति । ततः काननभूमे रमणीयताश्रवणानन्तरं स राजकुमार इत्यध्याहार्यम्, स्त्रीजनवल्लभानां स्त्रिय एव जनः स्त्रीजनस्तस्य वल्लभानां प्रियाणां 'दयितं वल्लभं प्रियम्' इत्यमरः । पुरकाननानां नगरोपकण्ठवर्तिनामुद्यानानां मनोज्ञभावं मनोज्ञश्चासौ भावश्च मनोज्ञभावस्तं मनोहरतां 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः । 'भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु बन्धुजन्तुविभूतिषु । रत्याद्यौ च' इति मेदिनी । श्रुत्वाऽऽकर्ण्य, अन्तर्गृहे गृहाभ्यन्तरेऽवरुद्धः बन्दीकृतो बद्धनाग इव हस्तीव 'नागः पन्नगमातङ्गक्रूराचारिषु तोयदे' इति मेदिनी । 'गजेऽपि नागमातङ्गौ', इत्यमरः । बहिःप्रयाणाय उद्यानगमनाय बुद्धिं मतिं चकार ॥ २ ॥

**ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।**
**स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्राम् ॥ ३ ॥**

तत इति । ततो बहिःप्रयाणविचारानन्तरं नृपः शुद्धोदनस्तस्य पुत्राभिधानस्य पुत्र इत्याभिधानं सञ्ज्ञा यस्य तस्य मनोरथस्य मनसो रथस्तस्य मनोरथस्वरूपस्य तस्य सर्वार्थसिद्धस्य भावं बहिर्गमनेच्छारूपमभिप्रायं निशम्य आकर्ण्य स्नेहस्य पुत्रविषयकस्य प्रेम्णः, लक्ष्म्याः

निर्ममः शरीरयात्रामात्रार्थेऽपि प्रारब्धकर्माक्षिप्ते कौपीनाच्छादनादौ ममेदमित्यभिमानवर्जितः सन् यः पुमांश्चरति प्रारब्धकर्मवशेन भोगान् भुङ्क्ते यादृच्छिकतया यत्र क्वापि गच्छतीति वा। स एवंभूतः स्थितप्रज्ञः शान्तिं सर्वसंसारदुःखोपरमलक्षणामविद्यातत्कार्यनिवृत्तिमधिगच्छति ज्ञानबलेन प्राप्नोति। तदेतदीदृशं व्रजनं स्थितप्रज्ञस्येति चतुर्थप्रश्नस्योत्तरं परिसमाप्तम् ॥ ६३ ॥

तदेवं चतुर्णां प्रश्नानामुत्तरव्याजेन सर्वाणि स्थितप्रज्ञलक्षणानि मुमुक्षुकर्तव्यतया कथितानि। सम्प्रति कर्मयोगफलभूतां साङ्ख्यनिष्ठां फलेन स्तुवन्नुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ६४ ॥**
**इति श्रीमद्भगवद्गीतायां सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥**

एषा स्थितप्रज्ञलक्षणव्याजेन कथिता, एषा तेऽभिहिता साङ्ख्ये बुद्धिरिति च प्रागुक्ता स्थितिर्निष्ठा सर्वकर्मसंन्यासपूर्वकपरमात्मज्ञानलक्षणा ब्राह्मी ब्रह्मविषया हे पार्थैनां स्थितिं प्राप्य यः कश्चिदपि पुनर्न विमुह्यति। नहि ज्ञानबाधितस्याज्ञानस्य पुनः सम्भवोऽस्ति अनादित्वेनोत्पत्त्यसम्भवात्। अस्यां स्थितावन्तकालेऽपि अन्त्येऽपि वयसि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं ब्रह्मरूपं निर्वाणमिति वा, ऋच्छति गच्छत्यभेदेन। किमु वक्तव्यं यो ब्रह्मचर्यादेव संन्यस्य यावज्जीवमस्यां ब्राह्म्यां स्थिताववतिष्ठते स ब्रह्मनिर्वाणमृच्छतीत्यपिशब्दार्थः ॥ ६४ ॥

ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलम् ।
तत्फलं ज्ञाननिष्ठैवेत्यध्यायेऽस्मिन् प्रकीर्तितम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्य-
श्रीमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां
सर्वगीतार्थसूत्रणं नाम द्वितीयोऽध्यायः ॥ २ ॥

# अथ महाकाव्यश्वघोषविरचिते

## बुद्धचरिते तृतीयः सर्गः।

**ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि।**
**शुश्राव पद्माकरमण्डितानि गीतैर्निबद्धानि स काननानि॥ १॥**

अथ सर्वार्थसिद्धस्य वैराग्योत्पत्तिं दर्शयितुं तदङ्गतया तदीयोद्यानविहारजिगमिषां प्रस्तौति--तत इति। ततः सुतोत्पत्त्यनन्तरं प्रसादसुखानुभवोत्तरं वा कदाचित् कस्मिंश्चित्काले मृदुशाद्वलानि मृदूनि कोमलानि शाद्वलानि हरिततृणाच्छन्नाः प्रदेशा येषु तानि, शादो बालतृणमस्ति यत्र तच्छाद्वलम्, नडशादाड् वलच्' (पा० ४. २. २४) इति वलच्प्रत्ययः। 'शाद्वलं शादहरिते' इत्यमरः। 'शादः कर्दमशष्पयोः' इति विश्वः। लोपधशब्दानां क्लीबत्वाभिधानाच्छाद्वलशब्दस्य क्लीबत्वम्। तथाहि शय्या शाद्वलमिति हर्षः। पुंस्कोकिलोन्नादितपादपानि पुमांसश्च ते कोकिलाश्चेति पुंस्कोकिलास्तैरुन्नादिताः शब्दिताः पादपा वृक्षा येषु तानि। पुंस्कोकिल इत्यत्र पुमः खय्यम्परे (पा० ८. ३. ६.) इति रुः। सम्पुंकानामिति सः। अत्र प्रागल्भ्यद्योतनाय पुंस्त्वोक्तिः। तेन कामोद्दीपकत्वं व्यज्यते। पद्माकरमण्डितानि पद्मानामाकराः पद्माकरास्तडागाः, तैर्मण्डितानि विभूषितानि। गीतैर्निबद्धानि पद्दिरुतैर्युक्तानि काननानि वनानि काननभूमेर्वर्णनानीत्यर्थः। शुश्राव। अत्र सर्गे उपजातिवृत्तम्। विशेषस्तु वक्ष्यते॥ १॥

**श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम्।**
**बहिःप्रयाणाय चकार बुद्धिमन्तर्गृहे नाग इवावरुद्धः॥ २॥**

श्रुत्वेति। ततः काननभूमे रमणीयताश्रवणानन्तरं स राजकुमार इत्यध्याहार्यम्, स्त्रीजनवल्लभानां स्त्रिय एव जनः स्त्रीजनस्तस्य वल्लभानां प्रियाणां 'दयितं वल्लभं प्रियम्' इत्यमरः। पुरकाननानां नगरोपकण्ठवर्तिनामुद्यानानां मनोज्ञभावं मनोज्ञश्चासौ भावश्च मनोज्ञभावस्तं मनोहरतां 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः। 'भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु बन्धुजन्तुविभूतिषु। रत्याद्यौ च' इति मेदिनी। श्रुत्वाऽऽकर्ण्य, अन्तर्गृहे गृहाभ्यन्तरेऽवरुद्धः बन्दीकृतो बद्धनाग इव हस्तीव 'नागः पन्नगमातङ्गक्रूराचारिषु तोयदे' इति मेदिनी। 'गजेऽपि नागमातङ्गौ', इत्यमरः। बहिःप्रयाणाय उद्यानगमनाय बुद्धिं मतिं चकार॥ २॥

**ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य।**
**स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्राम्॥ ३॥**

तत इति। ततो बहिःप्रयाणविचारानन्तरं नृपः शुद्धोदनस्तस्य पुत्राभिधानस्य पुत्र इत्यभिधानं सञ्ज्ञा यस्य तस्य मनोरथस्य मनसो रथस्तस्य मनोरथस्वरूपस्य तस्य सर्वार्थसिद्धस्य भावं बहिर्गमनेच्छारूपमभिप्रायं निशम्य आकर्ण्य स्नेहस्य पुत्रविषयकस्य प्रेम्णः, लक्ष्म्याः

स्वसम्पत्तेः, वयसश्च पुत्रतारुण्यावस्थायाश्च योग्यामुचितां विहारयात्रां विहाराय यात्रा ताम् आज्ञापयामास आदिदेश ॥ ३ ॥

**निवर्तयामास च राजमार्गे सम्पातमार्तस्य पृथग्जनस्य ।**
**मा भूत्कुमारः सुकुमारचित्तः संविग्नचेता इति मन्यमानः ॥ ४ ॥**

निवर्तयामासेति । सुकुमारं मृदुलं चित्तं मनो यस्य स मृदुलान्तःकरणः कुमारः संविग्नचेताः संविग्नमुद्विग्नं चेतो मनो यस्य स विरक्तमना इत्यर्थः । मा भूद् 'न माङ्योगे' इत्यड्निषेधः, दुखितजनदर्शनेन विरक्तो न स्यादिति मन्यमानः स नृप इत्यध्याहार्यम् । राजमार्गे मार्गाणां राजा राजमार्गः 'राजदन्तादिषु परम्' ( पा० २. २. ३१ ) इति मार्गशब्दस्य परनिपातः, मुख्यो मार्ग इत्यर्थः । तस्मिन् आर्तस्य दुःखितस्य पृथग्जनस्य प्राकृतजनस्य 'पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः । 'पृथग्जनस्तु पुंलिङ्गः कथितो नीचमूर्खयोः' इति मेदिनी । सम्पातमितस्ततः सञ्चारं निवर्तयामास भृत्यजनद्वारा निषेधयामासेत्यर्थः । प्राकृतजनदर्शनेनास्य विरक्तिर्मा भूदिति हेतोः प्राकृतजनापसारणं कारितमिति तत्त्वम् ॥ ४ ॥

**प्रत्यङ्गहीनान् विकलेन्द्रियांश्च जीर्णातुरादीन् कृपणांश्च दिक्षु ।**
**ततः समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रुः ॥ ५ ॥**

राजमार्गे केषां सञ्चारं निवर्तयामासेत्याह—प्रत्यङ्गेति । ततो राजकृतपृथग्जनसञ्चारप्रतिषेधानन्तरं राजपुरुषा इत्यध्याहार्यम् । प्रत्यङ्गहीनान् प्रत्यङ्गरहितान् हीनाच्छिनासादीन् 'प्रत्यङ्गं कर्णनासाक्षिलिङ्गमङ्गं करादिकम्', इति शब्दचन्द्रिका । विकलेन्द्रियांश्च विकलानि अस्वस्थानीन्द्रियाणि येषां तान्, जीर्णातुरादीन् जीर्णा वृद्धाश्च आतुरा रोगिणश्चेति जीर्णातुरास्ते आदयो येषां तान्, आदिशब्देन कुष्ठिपतितादीनां ग्रहणम् । कृपणान् दीनान् च, परेणात्यन्तिकेन साम्ना सामनीतिप्रयोगेण मधुरवचनैरिति यावत्, नतु दण्डनीत्या, दिक्षु समुत्सार्य व्यपनीय राजपथस्य राजमार्गस्य परामुत्कृष्टां 'दूरानात्मोत्तमाः परा' इत्यमरः । शोभां चक्रुः ॥ ५ ॥

**ततः कृते श्रीमति राजमार्गे श्रीमान् विनीतानुचरः कुमारः ।**
**प्रासादपृष्ठादवतीर्य काले कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥ ६ ॥**

तत इति । ततः प्रत्यङ्गहीनादिनिवारणानन्तरं राजमार्गे राजाध्वनि श्रीमति शोभासम्पन्ने कृते सति श्रीमान् शोभावान् विनीतानुचरः विनीता विनयशालिनोऽनुचराः सेवका यस्य स कुमारः प्रासादपृष्ठात् राजभवनोर्ध्वभागात् 'प्रासादो देवभूभुजाम्' इत्यमरः । अवतीर्य अध आगत्य काले यथोचितसमये कृताभ्यनुज्ञः कृता दत्ताऽभ्यनुज्ञाऽनुमतिर्यस्मै नृपेणेति शेषः । स तथाभूतः, 'कृताभ्यनुज्ञा गुरुणा गरीयसा' इति कुमारसम्भवे । नृपं स्वपितरं राजानं शुद्धोदनम् अभ्यगच्छत् उपजगाम ॥ ६ ॥

**अथो नरेन्द्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य ।**
**गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच ॥ ७ ॥**

अथो अनन्तरं पुत्रावलोकनानन्तरमिति यावत्, नरेन्द्रः नराणां प्रजानामिन्द्रः स्वामी

जनपतिः शुद्धोदन आगताश्रुः, आगतानि अश्रूणि यस्य स तथा पुत्रदर्शनेन हर्षातिशयादुद्गतबाष्पः सन्, सुतं पुत्रं सर्वार्थसिद्धं शिरसि उपाघ्राय मङ्गलाशंसया शिरसि घ्रात्वा चिरं बहुकालं निरीक्ष्य दृष्ट्वा क्षणिकविरहस्यापि दुस्सहत्वादिति भावः। 'गच्छ विहर्तुं व्रज' इति वाचा गिरा आज्ञापयति स्म, एनं पुत्रं स्नेहात् प्रेम्णश्च हेतोः मनसा अन्तःकरणेन न मुमोच न त्यक्तवान्। गच्छेति पित्रा वचसैवोक्तं तन्मनस्तु स्नेहेन तत्रैव संसक्तमिति भावः ॥ ७ ॥

**ततः स जाम्बूनदभाण्डभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः।**
**अक्लीबविद्युच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह ॥ ८ ॥**

तत इति। ततः पित्राज्ञासमनन्तरं स कुमारः जाम्बूनदभाण्डभृद्भिः जाम्बूनदं सुवर्णं तस्य यानि भाण्डानि अश्वभूषणानि 'भाण्डं पात्रं वणिङ्मूलधने भूषाश्वभूषयोः' इति मेदिनी। तानि बिभ्रति धारयन्तीति जाम्बूनदभाण्डभृतस्तैः, चतुर्भिश्चतुस्सङ्ख्याकैः, निभृतैर्विनीतैः 'वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः' इत्यमरः। 'निभृतो विनीतः' इति कल्पद्रुमः। तुरङ्गैरश्वैर्युक्तम्, अक्लीबविद्युच्छुचिरश्मिधारम् न क्लीबा अक्लीबा वीर्यवती सा चासौ विद्युत् तडिच्च तद्वत् शुचिः एकत्राग्निमयत्वाद् अन्यत्र सुवर्णमयत्वात्पीतवर्णा सा अक्लीबविद्युच्छुचिः रश्मिधारा रश्मीणां धारा किरणपङ्क्तिर्यस्य तम् 'किरणप्रग्रहौ रश्मी' इत्यमरः। अत्र रश्मिपदेन प्रग्रहग्रहणमित्येके। हिरण्मयं हिरण्यस्य विकारो हिरण्मयस्तम्, दण्डिनायनेति निपातनात्साधु। 'हिरण्यं हेमहाटकम्' इत्यमरः। सौवर्णं रथं स्यन्दनमारुरोह आरूढवान् ॥ ८ ॥

**ततः प्रकीर्णोज्ज्वलपुष्पजालं विषक्तमाल्यं प्रचलत्पताकम्।**
**मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवान्तरीक्षम् ॥ ९ ॥**

तत इति। ततः स्यन्दनारोहणानन्तरं, सनक्षत्रः, नक्षत्रैः सह वर्तत इति सनक्षत्रः। नक्षत्रैस्सह वर्तमानश्चन्द्र अन्तरीक्षमिव आकाशमिव, अन्तरिक्षमेवान्तरीक्षम्। 'नभोऽन्तरिक्षं गगनम्' इत्यमरः। 'अन्तरा द्यावापृथिव्योः क्षान्तमवस्थितं भवति' इति निरुक्तम्। अथवा अन्तरा द्यावापृथिव्योर्मध्य ईक्ष्यत इति तत्, कर्मणि घञ्, व्योम। यद्वा अन्तः ऋक्षाणि अस्य, पृषोदरादित्वात्पक्षे ह्रस्वः, ऋकारस्य रित्वम्। अन्तरीक्षनिरुक्तिः श्रुतौ यथा—योऽन्तरे नाकाश आसीदन्तरिक्षमभवदीक्षं हि तन्नाम ततः पुराऽन्तरा वा इदानीमीक्षमभूदिति तस्मादन्तरीक्षमिति। सदृशानुयात्रः सदृशाः समानशीलवयस्का अनुयात्रा अनुयायिनो यस्य स तथाविधः कुमारः प्रकीर्णोज्ज्वलपुष्पजालम् उज्ज्वलानि विकसितानि च तानि पुष्पाणि च उज्ज्वलपुष्पाणि तेषां जालानि समूहा उज्ज्वलपुष्पजालानि, प्रकीर्णानि इतस्ततः क्षिप्तानि च तानि उज्ज्वलपुष्पजालानि यत्र तम् 'उज्ज्वलो दीप्तशृङ्गारविशदेषु विकाशिनि' इति मेदिनी। 'जालं समूह आनायगवाक्षक्षारकेष्वपि' इत्यमरः। विषक्तमाल्यं विषक्तानि विशेषेण सक्तानि सम्बद्धानि माल्यानि माला यस्मिंस्तम्, प्रचलत्पताकं प्रचलन्त्य इतस्ततः पवनेन कम्पमानाः पताका यस्मिंस्तं मार्गं पन्थानं प्रपेदे प्राप्तवान्, पद्यतेर्लिट्। यथा चन्द्रः सनक्षत्रो गगनमधिरोहति तथैव सदृशानुयात्रः कुमारः सुशोभितं मार्गं प्रापेति भावः ॥ ९ ॥

**कौतूहलात्स्फीततरैश्च नेत्रैर्नीलोत्पलार्धैरिव कीर्यमाणम् ।**
**शनैः शनै राजपथं जगाहे पौरैः समन्तादभिवीक्ष्यमाणः ॥ १० ॥**

कौतूहलादिति । पौरैः पुरे भवाः पौरास्तैः पुरवासिभिर्जनैरिति यावत्, समन्ताद् अभितः, अभिवीक्ष्यमाणो विलोक्यमानः स राजपुत्रः कौतूहलात्कौतुकात् स्फीततरैः, प्रफुल्लतरैः, नीलोत्पलार्धैः—नीलानि च तान्युत्पलानि च नीलोत्पलानि अर्धं नीलोत्पलानि नीलोत्पलार्धानि तैरिव ईषन्नीलवर्णानि नेत्राणि तैः कीर्यमाणं व्याप्तं राजपथं राजमार्गं शनैः शनैर्मन्दं मन्दं जगाहे प्रविवेश । 'गाहू विलोडने' इत्यतो लिटि रूपम् । अत्र नेत्राणां नीलोत्पलार्धसादृश्यसम्भावनयोत्प्रेक्षा ॥ १० ॥

**तं तुष्टुवुः सौम्यगुणेन केचिद्ववन्दिरे दीप्ततया तथान्ये ।**
**सौमुख्यतस्तु श्रियमस्य केचिद्वैपुल्यमाशंसिषुरायुषश्च ॥ ११ ॥**

तमिति । केचित्पौराः सौम्यगुणेन सौम्यश्चासौ गुणश्चेति सौम्यगुणस्तेन मनोज्ञतया 'सौम्यः सोमात्मजेऽनुग्रे मनोज्ञे सोमदेवते' इत्यमरः । तं कुमारं तुष्टुवुः प्रशशंसुः । तथान्ये केचिद् दीप्ततया देदीप्यमानतया प्रभावशालितयेत्यर्थः, ववन्दिरे प्रणेमुः। केचिद् अपरे सौमुख्यतः सुमुखस्य भावः सौमुख्यं तस्मात् सुमुखत्वादेव, तुरेवकारार्थः 'तुः स्याद्भेदेऽवधारणे' इत्यमरः । अस्य कुमारस्य श्रियं शोभां सर्वोत्कृष्टशालित्वमिति यावत्, आयुषो जीवितस्य वैपुल्यं विपुलस्य भावस्तत् विपुलताञ्च दीर्घायुर्भवत्वित्याशंसिषुराशीरूचुः । इन्द्रवज्रा ॥ ११ ॥

**निस्सृत्य नार्यश्च महाकुलेभ्यो व्यूहाश्च कैरातकवामनानाम् ।**
**कुब्जाः कृशेभ्यश्च निवेशनेभ्यो देवानुयानध्वजवत्प्रणेमुः ॥ १२ ॥**

निस्सृत्येति । नार्यो दास्यः महाकुलेभ्यो महान्ति च तानि कुलानि गृहाणि महाकुलानि तेभ्य ऐश्वर्यसम्पन्नगृहेभ्यः, 'अपादाने पञ्चमी' इति पञ्चमी । निस्सृत्य बहिरागत्य, कैरातकवामनानां कृधातोः 'इगुपधज्ञाप्रीकिरः कः' ( पा. ३. १. १३५ ) इति कप्रत्यये किर इति रूपम्, अतन्ति गच्छन्ति सततमिति अताः, किरश्च अताश्चेति किराताः वनेषु विविधमितस्ततः पर्यटन्तो भिल्लादिविशेषाः । किराताः एव कैराताः प्रज्ञादेराकृतिगणत्वात्स्वार्थेऽण् । कुत्सिताः कैराताः कैरातकाः 'कुत्सिते' इति कः । वामना ह्रस्वाः 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । तेषां च व्यूहाः समूहाश्च महाकुलेभ्यो निस्सृत्य, नार्यश्चेत्यत्र कुब्जाश्चेति पाठान्तरम् । 'वामनषण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः' इति दर्पणोक्तेर्वामनादीनां महाकुलवासस्य सिद्धत्वात् । कुब्जाश्च न्युब्जाश्च 'कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः' इत्यमरः । कुब्जा अत्र नार्य इति पाठान्तरम् । कृशेभ्योऽल्पेभ्यो निवेशनेभ्यो गृहेभ्यो निस्सृत्य देवानुयानध्वजवत् देवमनुयातीति देवानुयानः, कृत्यल्युटो बहुलमिति कर्त्रर्थे ल्युट् स चासौ ध्वजश्च स इव, इन्द्रध्वजमिवेत्यर्थः, प्रणेमुः । यथा लोक इन्द्रध्वजं प्रणमति तद्वत्तं राजकुमारं प्रणनाम ॥ १२ ॥

**ततः कुमारः खलु गच्छतीति श्रुत्वा स्त्रियः प्रैष्यजनात्प्रवृत्तिम् ।**
**दिदृक्षया हर्म्यतलानि जग्मुर्जनेन मान्येन कृताभ्यनुज्ञाः ॥ १३ ॥**

तत इति । तत कुमारनिर्गमनानन्तरं कुमारो राजपुत्रः खलु निश्चयेन गच्छति विहर्तुं यातीत्येवंविधां प्रैष्यजनात् प्रैष्य एव जनस्तस्मात्, 'नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका' इत्यमरः । प्रादूह्योढोढ्येषैष्येष्विति वृद्धिः । सेवकजनात् प्रवृत्तिं वार्तां 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । "प्रवृत्तिर्वृत्तवृत्तान्तप्रवाहेषु प्रवर्तने" इति हैमः । तथा च मेघे 'जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम्' इति । श्रुत्वाऽकर्ण्य मान्येन मानमर्हतीति मान्यस्तेन माननीयेन जनेन श्वशुरादिना कृताभ्यनुज्ञा दत्ताज्ञाः सत्यः कुमारस्य दिदृक्षया द्रष्टुमिच्छया हर्म्यतलानि हर्म्योपरिभागान् जग्मुः । एतदनुरूपोऽर्थो यथा कुमारसम्भवस्य सप्तमे सर्गे—

तस्मिन् मुहूर्ते पुरसुन्दरीणामीशानसन्दर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥ १३ ॥

**ताः स्रस्तकाञ्चीगुणविघ्निताश्च सुप्तप्रबुद्धाकुललोचनाश्च ।**
**वृत्तान्तविन्यस्तविभूषणाश्च कौतूहलेनानिभृताः परीयुः ॥ १४ ॥**

ता इति । स्रस्तकाञ्चीगुणविघ्निताः स्रस्ताः स्खलितास्ते काञ्च्या मेखलाया गुणाश्चेति स्रस्तकाञ्चीगुणास्तैर्विघ्निता विलम्बिताश्च तथा सुप्तप्रबुद्धाकुललोचनाः पूर्वं सुप्ता निद्रिताश्च पश्चात् प्रबुद्धाः, पूर्वकालैकेत्यादिना समासः । अत एवाकुलानि यथार्थतया वस्तु ग्रहीतुमसमर्थानि 'व्यस्ते त्वप्रगुणाकुलौ' इत्यमरः । लोचनानि नेत्राणि यासां तास्तथोक्ताः । वृत्तान्तविन्यस्तविभूषणा विरुद्धं न्यस्तानि विन्यस्तानि वृत्तान्तेन विन्यस्तानि वृत्तान्तविन्यस्तानि, वृत्तान्तविन्यस्तानि विभूषणानि याभिस्ताःकुमारो राजमार्गेण गच्छतीति वार्ताश्रवणेन तद्दर्शनेप्सया त्वरायां विपरीतन्यस्ताभरणा इत्यर्थः । 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्' इत्यमरः । कौतूहलेन कौतुकेन अनिभृता उत्कण्ठितास्सत्यः परीयुर्जग्मुरित्यर्थः । इन्द्रवज्रावृत्तम् ।

एतत्समानार्थकं पद्यं यथा कुमारसम्भवे—

अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रसना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १४ ॥

**प्रासादसोपानतलप्रणादैः काञ्चीरवैर्नूपुरनिःस्वनैश्च ।**
**वित्रासयन्त्यो गृहपक्षिसङ्घानन्योन्यवेगांश्च समाक्षिपन्त्यः ॥ १५ ॥**

प्रासादेति । प्रासादसोपानतलप्रणादैः प्रासादानां हर्म्याणां यानि सोपानान्यारोहणानि 'आरोहणं स्यात्सोपानम्' इत्यमरः । तेषु तलानां प्रणादाः पादतलप्रक्षेपेण सञ्जाताः शब्दास्तैः । काञ्चीरवैः काञ्चीनां मेखलानां रवाः शब्दाः 'ध्वनिध्वानरवस्वनाः' इत्यमरः । नूपुरनिःस्वनैश्च नूपुराणां मञ्जीराणां निःस्वना ध्वनयस्तैः 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । गृहाणां पक्षिसङ्घान् गृहपालितपक्षिसमूहान् 'सङ्घसार्थौ तु जन्तुभिः' इत्यमरः । वित्रासयन्त्यो भयमुत्पादयन्त्यस्तथाऽन्योन्यवेगान् अन्योन्यस्या ये वेगास्तान् परस्परधावनजन्यवेगान् समाक्षिपन्त्यः परस्परं प्रतिस्पर्धयन्त्यस्ताः परीयुरिति पूर्वेण सम्बन्धः । 'आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः' इति मेदिनी । इन्द्रवज्रा ॥ १५ ॥

**शीघ्रं समर्थाऽपि तु गन्तुमन्या गतिं निजग्राह ययौ न तूर्णम् ।**
**ह्रिया प्रगल्भा विनिगूहमाना रहःप्रयुक्तानि विभूषणानि ॥ १६ ॥**

शीघ्रमिति । अन्या काचन स्त्री शीघ्रं त्वरितं गन्तुं यातुं समर्थापि प्रगल्भा प्रौढा नायिका रहःप्रयुक्तानि रह एकान्ते प्रयुक्तानि धृतानि विभूषणानि स्तनचन्दनलेपादीन्यलङ्करणानि ह्रिया लज्जया विनिगूहमाना विशेषप्रकारेण दृष्टिपथात् परिहरन्ती गतिं गमनं निजग्राह अवरुरोध त्वरितं नागच्छदित्यर्थः ॥ १६ ॥

**परस्परोत्पीडनपिण्डितानां सम्मर्दसंक्षोभितकुण्डलानाम् ।**
**तासां तदा सस्वनभूषणानां वातायनेष्वप्रशमो बभूव ॥ १७ ॥**

परस्परेति । परस्परोत्पीडनपिण्डितानां परस्परमन्योन्यं यदुत्पीडनं सम्बाधस्तेन पिण्डितानां सङ्घीभूतानां सम्मर्दसंक्षोभितकुण्डलानां सम्मर्देन अन्योन्यसङ्घर्षेण सक्षोभितानि परस्परं सम्मर्दितानि कुण्डलानि कर्णाभरणानि यासां तासां सस्वनभूषणानां सस्वनानि सशब्दानि भूषणानि नूपुरादीनि यासां तासां वराङ्गनानां तदा कुमारागमनसमये वातायनेषु गवाक्षेषु अप्रशमो क्षोभो बभूव । राजकुमारदिदृक्षया सर्वासां गवाक्षेषु मुखार्पणेन सङ्घर्षो बभूवेत्यन्वयः ॥ १७ ॥

**वातायनेभ्यस्तु विनिःसृतानि परस्परायासितकुण्डलानि ।**
**स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि ॥ १८ ॥**

वातायनेभ्य इति । वातायनेभ्यो गवाक्षेभ्यस्तु विनिस्सृतानि राजकुमारावलोकनार्थं बहिर्गतानि परस्परायासितकुण्डलानि परस्परमन्योन्यं सङ्घर्षातिशयान्मुखानां संश्लेषविश्लेषाभ्यामायासितानि चञ्चलानि कुण्डलानि कर्णाभरणानि तानि, स्त्रीणां सुन्दरीणां मुखपङ्कजानि मुखानि पङ्कजानीवेति मुखकमलानि हर्म्येषु धनिनां वासेषु सक्तानि संलग्नानि पङ्कजानि पङ्के जातानि कमलानीव विरेजुः शुशुभिरे । विरेजुरित्यत्र 'फणां च सप्तानाम्' इति विकल्पेनैत्वाभ्यासलोपौ ॥ १८ ॥

**ततो विमानैर्युवतीकलापैः कौतूहलोद्घाटितवातयानैः ।**
**श्रीमत्समन्तान्नगरं बभासे वियद्विमानैरिव साप्सरोभिः ॥ १९ ॥**

तत इति । ततः कौतूहलोद्घाटितवातयानैः कौतूहलेन राजकुमारदर्शनकौतुकेन उद्घाटितानि अपावृतानि वातयानानि वातायनानि गवाक्षा येषां तैः, युवतीकलापैः युवावस्थापन्नस्त्रीणां कलापास्समूहा येषु तैः 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः । विमानै राजगृहैः 'विमानं व्योमयाने स्यात्सार्वभौमगृहेऽपि च' इति मेदिनी । समन्तात् श्रीमत् शोभायुक्तं नगरं साप्सरोभिः अप्सरोभिः सहितानि साप्सरांसि तैः, अप्सरःसहितैर्विमानैराकाशयानैः वियदिव गगनमिव 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' इत्यमरः । बभासे शुशुभे । एतेन तत्रत्यगृहाणामत्युन्नतत्वं स्त्रीणाञ्च सर्वातिशायिसौन्दर्यवत्त्वं व्यज्यते ॥ १९ ॥

**वातायनानामविशालभावादन्योन्यगण्डार्पितकुण्डलानाम् ।**
**मुखानि रेजुः प्रमदोत्तमानां बद्धाः कलापा इव पङ्कजानाम् ॥ २० ॥**

वातायनानामिति । वातायनानां गवाक्षाणाम् अविशालभावात् न विशालमविशालम्, अविशालस्य भावोऽविशालभावस्तस्मात् स्वल्पावकाशत्वात् सङ्घर्षतया संलग्नानि अन्योन्यगण्डार्पितकुण्डलानि अन्योन्यं गण्डेषु कपोलेष्वर्पितानि कुण्डलानि कर्णाभरणानि येषां तादृशानि प्रमदोत्तमानां प्रकृष्टो मदो हर्षो यासां ताः प्रमदाः । अथवा प्रमाद्यन्तीति पचादित्वात् प्रमदाः ताश्च ता उत्तमाश्च तासामुत्तमस्त्रीणां मुखान्याननानि वातायनेषु निबद्धाः पङ्कजानां कमलानां कलापास्संहतयः समूहा इव रेजुः शुशुभिरे ॥ २० ॥

**तं ताः कुमारं पथि वीक्षमाणाः स्त्रियो बभुर्गामिव गन्तुकामाः ।**
**ऊर्ध्वोन्मुखाश्चैनमुदीक्षमाणा नरा बभुर्द्यामिव गन्तुकामाः ॥ २१ ॥**

तमिति । पथि पूर्वोक्ते राजमार्गे तं कुमारं युवराजं वीक्षमाणाः पश्यन्त्यस्ता हर्म्यस्थाः स्त्रियो नार्यो गां भूमिं 'गौरिला कुम्भिनी क्षमा' इत्यमरः । गन्तुकामाः गन्तुं प्राप्तुं कामोऽभिलाषो यासां ताः 'तुं काममनसोरपि' इति तुमुनो मकारस्य लोपः । तथाविधा इव बभुः शुशुभिरे । तथा ऊर्ध्वोन्मुखा ऊर्ध्वमुद्गतमूर्ध्वावलोकनात्किञ्चिदुत्तानं मुखं येषां त उदीक्षमाणा ऊर्ध्वमवलोकयन्तो नरा द्यामाकाशं गन्तुकामा इव बभुः । उपरितः सतृष्णमधोऽवलोकनाद् भूमौ गमनेच्छा स्त्रीणाम्, अधस्तादूर्ध्वावलोकनादुपरिगमनेच्छा पुरुषाणामिति तर्क्यते, तेनौत्सुक्यातिशयो व्यज्यते ॥ २१ ॥

**दृष्ट्वा च तं राजसुतं स्त्रियस्ता जाज्वल्यमानं वपुषा श्रिया च ।**
**धन्याऽस्य भार्येति शनैरवोचञ्छुद्धैर्मनोभिःखलु नान्यभावात् ॥२२॥**

दृष्ट्वेति । ता हर्म्यवातायनावस्थिताः स्त्रियो नार्यो वपुषा शरीरेण श्रिया प्रभातिशयेन च जाज्वल्यमानम् अतिशयेन देदीप्यमानं तं राजसुतं राजकुमारं दृष्ट्वाऽवलोक्य अस्य भार्या स्त्री धन्या प्रशंसनीयेत्येवंप्रकारेण शुद्धैः कामवासनादिरहितैर्मनोभिरन्तःकरणैः शनैर्मन्दं यथा स्यात्तथाऽवोचन् अवदन् । अन्यभावादन्येनाभिप्रायेण तदभिलाषरूपेणेत्यर्थः । न खलु नैवावोचन् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङ् । 'वच उम्' इत्युम्' अवोचन् । इन्द्रवज्रा ॥ २२ ॥

**अयं किल व्यायतपीनबाहू रूपेण साक्षादिव पुष्पकेतुः ।**
**त्यक्त्वा श्रियं धर्ममुपैष्यतीति तस्मिन् हि ता गौरवमेव चक्रुः॥२३॥**

अयमिति । व्यायतपीनबाहुः, व्यायतौ विशेषेण आयतौ दीर्घौ च पीनौ पीवरौ बाहू भुजौ यस्य सः, आजानुबाहुरित्यर्थः । रूपेण सौन्दर्येण साक्षात्पुष्पकेतुः पुष्पाण्येव केतुर्यस्य सः, मदन इव स्थितः । अयं राजकुमारः श्रियं राजलक्ष्मीं त्यक्त्वा विसृज्य, किलेति सम्भावनायां 'वार्तासम्भाव्ययोः किल' धर्मं वैराग्यरूपम् उपैष्यति प्राप्स्यति इति हेतोस्ताः स्त्रियः तस्मिन् हि राजकुमारे गौरवमेव आदरमेव चक्रुः कृतवत्यः ॥ २३ ॥

**कीर्णं तथा राजपथं कुमारः पौरैर्विनीतैः शुचिधीरवेषैः ।**
**तत्पूर्वमालोक्य जहर्ष किञ्चिन्मेने पुनर्भावमिवात्मनश्च ॥२४॥**

कीर्णमिति । कुमारो राजपुत्रः शुचिधीरवेषैः, धीरो गाम्भीर्याभिव्यञ्जकश्चासौ वेषो रचना-

विशेष इति धीरवेषः, शुचिः पवित्रो धीरवेषो येषां तैः, विनीतैर्विनयसम्पन्नैः पौरैः पुरवासिभिस्तथा पूर्वोक्तप्रकारेण कीर्णं व्याप्तं राजपथं राजमार्गं तत्पूर्वं स एव पूर्वस्तत्पूर्वस्तम् आलोक्य दृष्ट्वा किञ्चिद् जहर्ष सन्तुतोष । पुनश्च स्वस्यात्मनो भावमिव अन्तःकरणमिव मेने । यथा स्वान्तःकरणमनेकसङ्कल्पागमनिर्गमाभिव्याप्तं तथैवायं राजमार्गोऽपि विविधपदार्थागमानागमपरिव्याप्तः । एतेन क्षणिकवादोऽङ्कुररूपेण सूच्यते । यद्वा पूर्वमन्तःपुर एव निरुद्धतयाऽधुना स्वतन्त्रसञ्चारतया चादृष्टपूर्वनगरशोभादर्शनादात्मनः पुनर्जन्म मेन इत्यभिप्रायः । इन्द्रवज्रा ॥ २४ ॥

**पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः ।**
**जीर्णं नरं निर्ममिरे प्रयातुं संचोदनार्थं क्षितिपात्मजस्य ॥ २५ ॥**

पुरमिति । शुद्धाधिवासाः शुद्धोऽधि उपरि वासो वसतिः येषां ते तथा देवा देवताः तद् राजकुमाराधिष्ठितं पुरं प्रहृष्टं प्रकर्षेण हृष्टमानन्दितं स्वर्गमिव स्वाधिष्ठितस्थानमिव समवेक्ष्य दृष्ट्वा क्षितिपात्मजस्य क्षितिं पालयतीति क्षितिपस्तस्यात्मज आत्मनो जातस्तस्य राजपुत्रस्य सञ्चोदनार्थं वैराग्यप्रेरणार्थं जीर्णं वृद्धं नरं मनुष्यं प्रयातुमग्रतश्चलितुं निर्ममिर उत्पादयामासुः ॥ २५ ॥

**ततः कुमारो जरयाभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तम् ।**
**उवाच सङ्ग्राहकमागतास्थस्तत्रैव निष्कम्पनिविष्टदृष्टिः ॥ २६ ॥**

तत इति । ततस्तदनन्तरं कुमारो राजसुतः जरया वार्धक्येनाभिभूतमाक्रान्तम् अत एव नरेभ्य इतरपुरुषेभ्यः पृथगाकृतिं पृथग् आकृतिर्यस्य स तं विभिन्नाकारम् अत्यन्तविकृतत्वेन दयनीयाकारमित्यर्थः । तं दृष्ट्वाऽवलोक्य आगतास्थः आगता आस्था यस्य स तज्जिज्ञासायां सञ्जातेच्छः "आस्था स्यादालम्बनस्थानयत्नापेक्षासु योषिति" इति मेदिनी । तत्रैवं वृद्धे निष्कम्पनिविष्टदृष्टिः निष्कम्पं निश्चलं यथा तथा निविष्टा प्रविष्टाऽत्यन्तं संलग्नेत्यर्थः, दृष्टिर्यस्य तथाभूतस्सन् सङ्ग्राहकं संगृह्णाति मुष्टिबन्धेन रज्जुं धारयतीति सङ्ग्राहकः सारथिस्तम्, 'मुष्टिबन्धस्तु सङ्ग्राहः' इत्यमरः । उवाच वक्ष्यमाणप्रकारेणावोचत् ॥ २६ ॥

**क एष भोः सूत ! नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः ।**
**भ्रूसंवृताक्षः शिथिलानताङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा ॥ २७ ॥**

क एष इति । भोः सूत सारथे ! सितैर्धवलैः केशैः शिरोरुहैरुपलक्षितः यष्टिविषक्तहस्तः यष्ट्यां दण्डे विषक्तो यष्टिविषक्तः हस्तो यस्य सोऽवलम्बितयष्टिः, भ्रूसंवृताक्षो भ्रूभ्यामतिवार्धक्येन संवृते छादितेऽक्षिणी यस्य स तथाभूतः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् । शिथिलानताङ्गः शिथिलानि शैथिल्ययुक्तानि आनतानि नम्रीभूतानि अङ्गानि शरीरावयवा यस्य सः । 'अङ्गं शरीरावयवः' इत्यमरः । तादृशः क एष नरोऽभ्युपेतः सम्मुखमागतो दृश्यत इति भावः । किम् एषा पुरो दृश्यमाना श्वेतकेशत्वादिरूपा विक्रिया रोगादिजनितो विकारः, किं प्रकृतिः स्वभावः, यदस्यामवस्थायां सर्वेषां श्वेतकेशत्वादिकं जायते । किं वा यदृच्छा स्वैरकारिता स्वेच्छयैवंविधो भूत्वा गच्छतीति भावः ॥ २७ ॥

**इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय ।**
**संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥ २८ ॥**

इत्येवमिति । इत्येवममुना प्रकारेणोक्तः पृष्ट इत्यर्थः, स रथप्रणेता रथस्य प्रणेता सारथिस्तैरेव जीर्णपुरुषोत्पादकैर्देवैरेव कृतबुद्धिमोहो बुद्धेर्मोहो भ्रमो बुद्धिमोहः कृतो जनितो बुद्धिमोहो यस्य स तथाभूतः । अदोषदर्शी दोषं मिथ्यात्वरूपं न दर्शयतीति तच्छीलः सः, यद्वा भाविदुष्परिणामविचारशून्यः संरक्ष्यमपि संरक्षितुं योग्यं गोपनीयमपि अर्थं नृपात्मजाय कुमाराय निवेदयामास कथयामास ॥ २८ ॥

**रूपस्य हन्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनाम् ।**
**नाशः स्मृतीनां रिपुरिन्द्रियाणामेषा जरा नाम ययैष भग्नः ॥ २९ ॥**

रूपस्येति । रूपस्य सौन्दर्यस्य हन्त्री नाशयित्री बलस्य सामर्थ्यस्य 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः', इत्यमरः । व्यसनमापत्तिस्थानम् । शोकस्य शुचः कारणम्, रतीनां प्रेम्णां निधनं मरणं, स्मृतीनां पूर्वगृहीतविषयस्फुरणानां नाशो नाशहेतुः । इन्द्रियाणां ज्ञानेन्द्रियकर्मेन्द्रियाणां रिपुः शत्रुः तत्तत्सामर्थ्यसमुच्छेदकत्वाच्छत्रुः, यया एष भग्नो दुर्दशां नीतः एषा जरा नाम वृद्धतेति प्रसिद्धा । इन्द्रवज्रा ॥ २९ ॥

**पीतं ह्यनेनापि पयः शिशुत्वे कालेन भूयः परिसृप्तमुर्व्याम् ।**
**क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेतः ॥ ३० ॥**

पीतमिति । अनेन पुरुषेणापि, अपिना इतरैरिवेति गम्यते । शिशुत्वे बाल्ये पयो मातुर्दुग्धं पीतम् । भूयस्तदनन्तरं कालेन कियतापि समयेन उर्व्यां भूमौ परिसृप्तं विलुठितम् कौमारे क्रीडितमिति भावः । क्रमेण पुनः कालव्यतिक्रमानन्तरं वपुष्मान् शरीरशोभासम्पत्तियुक्तो युवा च भूत्वा तेनैव क्रमेण जरामिमां पुरो दृश्यमानामवस्थामुपेतः प्राप्तः । एतदनुरूपमर्थं यथाह भर्तृहरिः—

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥ ३० ॥

**इत्येवमुक्ते चलितः स किञ्चिद्राजात्मजः सूतमिदं बभाषे ।**
**किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥ ३१ ॥**

इत्येवमिति । इत्येवम् अमुना पूर्वोक्तप्रकारेण उक्ते सति सारथिनेति शेषः । राजात्मजो राजपुत्रः किञ्चिच्चलितः कम्पितः दुर्मनाः सूतं सारथिम् इदं वक्ष्यमाणं बभाष उक्तवान् । एष दोषो जरारूपः किं ममापि भविता इति, ततो राजपुत्रप्रश्नानन्तरं सारथिः सूतोऽस्मै राजपुत्राय अभ्युवाच उक्तवान् ॥ ३१ ॥

**आयुष्मतोऽप्येष वयःप्रकर्षो निःसंशयं कालवशेन भावी ।**
**एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैव लोकः ॥ ३२ ॥**

आयुष्मत इति । आयुष्मतो भवतोऽपि 'आयुष्मन् रथिनं सूतः' इति साहित्यदर्पणे । वयःप्रकर्षो वयसो बाल्याद्यवस्थाया विपरिणामः अङ्गभङ्गवैक्लव्यादिजनकं वार्धक्यमित्यर्थः ।

निस्संशयमवश्यं कालवशेन कालाधीनत्वेन भावी यौवनाद्यपगमेन तवापि जरा भविष्यतीत्यर्थः। एष लोको मनुष्यजनः 'लोकस्तु भुवने जने' इत्यमरः। एवं कालक्रमेण रूपविनाशयित्रीं रूपं विनाशयतीत्यसौ रूपविनाशयित्री तां शरीरसौन्दर्यविनाशकरीं जरां जानाति बहुकालजीवितमिच्छति च। इन्द्रवज्रा ॥ ३२ ॥

**ततः स पूर्वाशयशुद्धबुद्धिर्विस्तीर्णकल्पाचितपुण्यकर्मा।**
**श्रुत्वा जरां संविविजे महात्मा महाशनेर्घोषमिवान्तिके गौः ॥ ३३ ॥**

तत इति। ततः सारथिवाक्यश्रवणानन्तरं पूर्वाशयशुद्धबुद्धिः पूर्वश्चासौ आशयश्चेति पूर्वाशयस्तेन शुद्धा बुद्धिर्यस्य स जन्मान्तरीयसंस्कारनिष्कल्मषबुद्धिः, विस्तीर्णकल्पाचितपुण्यकर्मा विस्तीर्णा दीर्घा ये कल्पा ब्राह्मदिनरूपाः समयाः 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' इति मेदिनी। तेष्वाचितानि सञ्चितानि पुण्यकर्माणि शुभोदयकर्माणि येन सः, महात्मा महानात्मा यस्य स महामनाः जरां वृद्धतां श्रुत्वाऽऽकर्ण्य, अन्तिके समीपे महाशनेः महांश्चासौ अशनिश्च तस्य महतो वज्रस्य घोषं ध्वनिम् 'घोष आभीरपल्ल्यां स्याद् गोपालध्वनिघोषके। कांस्ये चाम्बुदनादे ना'। श्रुत्वाऽऽकर्ण्य गौर्वृषभ इव संविविजे भयभीतो बभूव ॥ ३३ ॥

**निःश्वस्य दीर्घं स्वशिरः प्रकम्प्य तस्मिंश्च जीर्णे विनिवेश्य चक्षुः।**
**तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं स संविग्न इदं जगाद ॥ ३४ ॥**

निःश्वस्येति। स राजपुत्रो दीर्घं निःश्वस्य स्वशिरः प्रकम्प्य तस्मिन् जीर्णे वृद्धे चक्षुर्दृष्टिं विनिवेश्य निधाय तां च जनतां जनानां समूहो जनता तां 'ग्रामजनबन्धुभ्यस्तल्' इति समूहार्थे तल्, सहर्षां हर्षेण सहितां सानन्दां दृष्ट्वा संविग्नो विरक्तः सन्, कर्तरि क्तः, इदं वक्ष्यमाणं वाक्यं जगाद उक्तवान्। इन्द्रवज्रा ॥ ३४ ॥

**एवं जरा हन्ति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च।**
**न चैव संवेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः ॥ ३५ ॥**

एवमिति। एवममुना प्रकारेण जरा वार्धक्यं निर्विशेषं निर्गतो विशेषो राजप्रजाद्यविवेकेन सर्वसाधारणतया यस्मात् कर्मणस्तत्तथा स्मृतिश्च पूर्वानुभवजन्यज्ञानं च रूपञ्च अङ्गप्रत्यङ्गावयवजन्यं शरीरसौन्दर्यञ्च पराक्रमञ्च पौरुषं च हन्ति नाशयति च। परं लोको जनः 'लोकस्तु भुवने जने' इत्यमरः। ईदृशं जराकर्तृकस्मृत्यादिनाशनं प्रत्यक्षतोऽपि अक्षि प्रति प्रत्यक्षं तस्मात् स्वचक्षुषाऽपि ईक्षमाणोऽवलोकयन् उद्वेगं न चैवोपैति। यथाह भर्तृहरिः—

आदित्यस्य गतागतैरहरहः संक्षीयते जीवनं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥

**एवं गते सूत! निवर्तयाश्वान् शीघ्रं गृहाण्येव भवान्प्रयातु।**
**उद्यानभूमौ हि कुतो रतिर्मे जराभये चेतसि वर्तमाने ॥ ३६ ॥**

एवमिति। हे सूत सारथे ! एवं गते स्थिते सति अश्वान्निवर्तय। भवान् शीघ्रं सत्वरं गृहान् प्रयातु गच्छतु। हि यतः चेतसि अन्तःकरणे जराभये जराया भयं तस्मिन् वर्तमाने 'उक्तस्वरूपा ममापि जरा भविष्यति' इति सभयहृदये सति उद्यानभूमौ रती रागः प्रेम कुतः कथं भवेत्, नैवेत्यर्थः ॥ ३६ ॥

**अथाज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियन्ता।**
**ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ॥ ३७ ॥**

अथेति। अथानन्तरं नियन्ता सारथिः 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। तस्य भर्तृसुतस्य राजकुमारस्याज्ञया। 'हेतोः' (पा० २. ३. २३) इति तृतीया। रथं निवर्तयामास परावर्तयामास। ततः कुमारो राजपुत्रश्चिन्तावशश्चिन्ताधीनस्तदेव क्रीडायुक्तं भवनं गृहं शून्यमिव क्रीडादिरहितमिव मनसश्चिन्तायुक्तत्वान्निस्सारमिव प्रपेदे प्राप्तवान् ॥ ३७ ॥

**यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः।**
**ततो नरेन्द्रानुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ॥ ३८ ॥**

यदेति। यदा तु यस्मिन्समये तत्रैव तस्मिन्नेव राजगृहे जरा जरेति प्रपरीक्षमाणः प्रकर्षेण विचारयन्, यद्वा प्रकर्षेण परित ईक्षमाणः शर्म सुखं 'शर्मसातसुखानि च' इत्यमरः। न लेभे न प्राप, तदा नरेन्द्रेण राज्ञा अनुमतोऽनुमोदितस्तेनैव क्रमेण भूयः पुनरपि बहिर्जगाम विहारार्थं प्रतस्थे। उपेन्द्रवज्रा ॥ ३८ ॥

**अथापरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यम्।**
**दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ॥ ३९ ॥**

अथेति। अथानन्तरं त एव पूर्वोक्ताः सम्यग्दृष्टयो देवा व्याधिपरीतदेहं व्याधिभी रोगैः परीतो व्याप्तो देहः शरीरः यस्य स तं तथाविधम् अपरमन्यं मनुष्यं ससृजुरुत्पादयामासुः। शौद्धोदनिः शुद्धोदनस्य राज्ञः पुत्रस्तञ्च देवसृष्टं व्याधियुक्तं पुरुषमवलोक्य तद्गतदृष्टिस्तस्मिन् मनुष्ये गता दृष्टिर्यस्य तथाभूतः सन्नेव सारथिं सूतम् आबभाष उक्तवान् पप्रच्छेति यावत् ॥ ३९ ॥

**स्थूलोदरः श्वासचलच्छरीरः स्रस्तांसबाहुः कृशपाण्डुगात्रः।**
**अम्बेति वाचं करुणं ब्रुवाणः परं समाश्रित्य नरः क एषः ॥ ४० ॥**

स्थूलोदर इति। स्थूलोदरः स्थूलं बृहदुदरं यस्य सः। श्वासचलच्छरीरः श्वासेन चलत्कम्पमानं शरीरं यस्य सः 'शरीरं वर्ष्म विग्रहः' इत्यमरः। स्रस्तांसबाहुः, अंसौ च बाहू च 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (पा. २. ४. २.) इति समाहारद्वन्द्वः। 'स नपुंसकम्' इति नपुंसकत्वाद्ध्रस्वत्वे अंसबाहु। स्रस्तमंसबाहु यस्येति बहुव्रीहिः। 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः। कृशपाण्डुगात्रः पाण्डु पीतवर्णं च तद् गात्रं वपुश्चेति पाण्डुगात्रं कृशं परिक्षीणं पाण्डुगात्रं यस्य सः, 'अथ कलेवरं गात्रं वपुः' इत्यमरः। परमन्यं पुरुषं समाश्रित्य 'हे अम्ब हे मातः' इत्यमुना प्रकारेण वाचं वाक्यं करुणं दीनं यथा स्यात्तथा ब्रुवाण एष पुरोवर्ती नरो मनुष्यः कः ? ॥ ४० ॥

**ततोऽब्रवीत्सारथिरस्य सौम्य ! धातुप्रकोपप्रभवः प्रवृद्धः ।**
**रोगाभिधानः सुमहाननर्थः शक्तोऽपि येनैष कृतोऽस्वतन्त्रः ॥ ४१ ॥**

तत इति । ततः कुमारप्रश्नानन्तरं सारथिः सूतोऽब्रवीद् अवदत् । किमब्रवीदित्याह—हे सौम्य 'भद्र सौम्यमुखेत्येवमधमैस्तु कुमारकः' इति दर्पणोक्तेः । हे कुमार ! अस्य पुरुषस्य धातूनां वातपित्तकफानां प्रकोपो वैषम्यं तस्मात्प्रभवः उत्पत्तिर्यस्य सः, प्रवृद्धः प्रकृष्टो वृद्धः परां दशां प्राप्तोऽसाध्य इत्यर्थः । रोगाभिधानः रोग इत्यभिधानं सञ्ज्ञा यस्य सः 'अभिमानं च नामधेयं च नाम' इत्यमरः । सुमहान् अनर्थः, येन रोगाभिधमहानर्थेन एष शक्तोऽपि, समर्थोऽपि, अस्वतन्त्रो न स्वतन्त्रः पराधीन इति यावत्, कृतः ॥ ४१ ॥

**इत्यूचिवान् राजसुतः स भूयस्तं सानुकम्पो नरमीक्षमाणः ।**
**अस्यैव जातः पृथगेष दोषः सामान्यतो रोगभयं प्रजानाम् ॥ ४२ ॥**

इतीति । स राजपुत्रस्तं देवनिर्मितं नरं सानुकम्पम् अनुकम्पया सहितं यथा स्यात्तथा सदयम् ईक्षमाणः पश्यन् भूयः पुनरपि इत्येवं वक्ष्यमाणप्रकारेण ऊचिवान् । एष दोषो विकारोऽस्यैव पृथक् पार्थक्येनासाधारणतया जातः किम् ? किमिति प्रश्ने । अथवा सामान्यतः समानस्य भावः सामान्यं तस्माद् अविशेषेण सर्वासां प्रजानां रोगभयं रोगाद् भयं, किमस्यैव रोगो जात उत सर्वेषामयं साधारण इति । इन्द्रवज्रा ॥ ४२ ॥

**ततो बभाषे स रथप्रणेता कुमार ! साधारण एष दोषः ।**
**एवं हि रोगैः परिपीड्यमानो रुजातुरो हर्षमुपैति लोकः ॥ ४३ ॥**

तत इति । ततः कुमारप्रश्नश्रवणानन्तरं स रथप्रणेता रथस्य प्रणेता सारथिः बभाषेऽब्रवीत् । किमित्याह—हे कुमार राजपुत्र ! एष दोषो रोगरूपः साधारणः प्राणिमात्रसामान्यः । एवमनेन प्रकारेण हि निश्चयेन रोगैर्दुःखैः परिपीड्यमानः परिभूयमानो रुजातुरो रोगाक्रान्तस्सन्नपि 'स्त्री रुग् रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः लोको जनो हर्षमानन्दमुपैति प्राप्नोति न तु निर्वेदमित्याश्चर्यम् ॥ ४३ ॥

**इति श्रुतार्थः स विषण्णचेताः प्रावेपताम्बूर्मिगतः शशीव ।**
**इदं च वाक्यं करुणायमानः प्रोवाच किञ्चिन्मृदुना स्वरेण ॥ ४४ ॥**

इतीति । इत्येवं प्रकारेण श्रुतार्थः श्रुत आकर्णितोऽर्थो रोगादिजनितोपद्रवादिर्येन सः विषण्णचेता विषण्णं चेतो यस्य स खिन्नचित्त इत्यर्थः, स कुमारः अम्बूर्मिगतः अम्बुनः सलिलस्य ऊर्मयोऽम्बूर्मयस्तान् गतः प्राप्तः प्रतिबिम्बितः 'द्वितीया श्रितातीतपतित०' इत्यादिना द्वितीयातत्पुरुषः, शशी चन्द्र इव प्रावेपत प्रकर्षेणाकम्पत । किञ्च करुणायमानः करुणरस इवाचरन् सन् मृदुना मार्दवयुक्तेन स्वरेण ध्वनिना इदं वक्ष्यमाणं वाक्यं प्रोवाच अवोचत् ॥ ४४ ॥

**इदं च रोगव्यसनं प्रजानां पश्यंश्च विश्रम्भमुपैति लोकः ।**
**विस्तीर्णमज्ञानमहो नराणां हसन्ति ये रोगभयैरमुक्ताः ॥ ४५ ॥**

इदमिति । इदञ्च प्रत्यक्षतया प्रजानां जनानां रोगव्यसनं रोगा एव व्यसनमिति तद्

रोगजन्यदुःखं पश्यंश्च पश्यन्नपीत्यर्थः, लोकः सकलोऽपि जनो विश्रम्भम्, अहमेव सर्वकालेष्वपि सुखी भविष्यामीति विश्वासमुपैति प्राप्नोति । अहो इत्याश्चर्ये । नराणां मनुष्याणां विस्तीर्णं च अतिमात्रं विवृद्धमज्ञानं खलु ये रोगभयै रोगा एव भयानि तैः, अमुक्ता अत्यक्ताः स्वात्मनो मन्यमाना हसन्ति ॥ ४५ ॥

**निवर्त्यतां सूत ! बहिःप्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ।**
**श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं सङ्कुचतीव चेतः ॥ ४६ ॥**

निवर्त्यतामिति । हे सूत हे सारथे ! बहिःप्रयाणाद् विहारार्थं बहिर्गमनाद् निवर्त्यतां परावृत्यतां त्वयेति शेषः । रथो नरेन्द्रसद्म नराणामिन्द्रो नरेन्द्रस्तस्य सद्म राजभवनं तदेव प्रयातु गच्छतु । मे मम चेतो रोगभयं रोगरूपं भयं श्रुत्वाऽऽकर्ण्य प्रत्याहतं प्रतिनिवृत्तं सद् रतिभ्यो विषयसुखाभिलाषेभ्यः सङ्कोचं निर्वेदं प्राप्नोतीव ॥ ४६ ॥

**ततो निवृत्तः स निवृत्तहर्षः प्रध्यानयुक्तः प्रविवेश वेश्म ।**
**तं द्विस्तथा प्रेक्ष्य च सन्निवृत्तं पर्येषणं भूमिपतिश्चकार ॥ ४७ ॥**

तत इति । ततस्तदनन्तरं निवृत्तो गमनतः परावृत्तो निवृत्तहर्षः निवृत्तो व्यपगतो हर्ष आनन्दो यस्य स राजकुमारः प्रध्यानयुक्तः प्रकर्षेण ध्यानं प्रध्यानं तस्मिन् युक्तो विचारमग्नः सन् सद्म क्रीडागृहं प्रविवेश प्रविष्टवान् । भूमिपतिः पृथ्वीपतिः शुद्धोदनस्तं कुमारं द्विर्द्विवारं 'द्वित्रिचतुर्भ्यः सुच्' इति सुच् । सन्निवृत्तं संसारसुखप्रतिनिवृत्तं प्रेक्ष्य दृष्ट्वा पर्येषणं तन्निवृत्तिकारणान्वेषणं चकार ॥ ४७ ॥

**श्रुत्वा निमित्तं तु निवर्तनस्य सन्त्यक्तमात्मानमनेन मेने ।**
**मार्गस्य शौचाधिकृताय चैव चुक्रोश रुष्टोऽपि च नोग्रदण्डः ॥४८॥**

श्रुत्वेति । निवर्तनस्य परावर्तनस्य निमित्तं जराजीर्णरुग्णपुरुषयोर्दर्शनरूपं कारणं श्रुत्वाऽऽकर्ण्य सूतसकाशादित्यर्थः । अनेन पुत्रेण सन्त्यक्तमुज्झितमात्मानं मेने । असितमुनिवाक्यस्मरणादयं मत्पुत्रो नातः परं विषयबन्धन कामयिष्यत इति मेने इति भावः । किञ्च मार्गस्य राजवर्त्मनः शौचाधिकृताय शौचे जीर्णातुरादिनिरसनेन शोधनेऽधिकृताय पुरुषाय 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' ( पा. १. ४. ३७ ) इति चतुर्थी । चुक्रोश चुकोप । रुष्टोऽपि क्रुद्धोऽपि उग्रो दण्डो यस्य स तीक्ष्णदण्डो न बभूव । भवितव्यतावशात्पुत्रविरक्तिमवगच्छंस्तस्मिञ्जने दयामेवाकार्षीदिति भावः । इन्द्रवज्रा ॥ ४८ ॥

**भूयश्च तस्मै विदधे सुताय विशेषयुक्तं विषयप्रचारम् ।**
**चलेन्द्रियत्वादपि नाम सक्तो नास्मान्विजह्यादिति नाथमानः ॥ ४९ ॥**

भूय इति । चलेन्द्रियत्वात् चलान्यस्थिराणि च तानीन्द्रियाणि चेति चलेन्द्रियाणि तेषां भावश्चलेन्द्रियत्वं तस्माद् हेतोः, अपि नाम कदाचित् सक्तो विषयेष्ववलीनोऽस्मान्न विजह्याद् न त्यजेदिति नाथमान आशंसन् 'आशिषि नाथः' इत्यात्मनेपदम् । राजा तस्मै विरक्ताय सुताय 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । विशेषयुक्तं विशेषैर्युक्तं पूर्वस्मादभ्यधिकं विषयप्रचारं विषयाणां प्रचारं सञ्चारं विदधे चक्रे ॥ ४९ ॥

**यदा च शब्दादिभिरिन्द्रियार्थैरन्तःपुरं नैव सुतोऽस्य रेमे ।**
**ततो बहिर्व्यादिशति स्म यात्रां रसान्तरं स्यादिति मन्यमानः ॥ ५० ॥**

यदेति । यदा च अभ्यधिके विषयप्रचारे सम्पादितेऽपि अस्य राज्ञः सुतः कुमारः, अन्तःपुरे स्त्रीगृहे शब्दादिभिः शब्दरूपरसगन्धादिभिरिन्द्रियार्थैरिन्द्रियाणां श्रोत्रादीनामर्थैर्विषयैर्नैव रेमे हर्षं नानुबभूव ततस्तदा स राजा रसान्तरम् अन्यो रसो रसान्तरं मयूरव्यंसकादित्वात्समासः । रसभेदो भवत्विति मन्यमानः, गृहक्रीडापेक्षया बहिःक्रीडारूपं रसान्तरं हिताय स्यादिति विचार्य बहिर्यात्रां विहारार्थं गमनं व्यादिशति स्म आज्ञापयामास । अत्र 'लट् स्मे' इति भूतार्थे लट् ॥ ५० ॥

**स्नेहाच्च भावं तनयस्य बुद्ध्वा स रागदोषानविचिन्त्य कांश्चित् ।**
**योग्याः समाज्ञापयति स्म तत्र कलास्वभिज्ञा इति वारमुख्याः ॥ ५१ ॥**

स्नेहादिति । स राजा तनयस्य पुत्रस्य भावमभिप्रायं संसारासारतया विरक्तिमित्यर्थः । बुद्ध्वा ज्ञात्वा कांश्चिद् रागदोषान् अविचिन्त्य, विषयेषु प्रवर्त्यमानोऽयं कांश्चिद्राजयक्ष्मादिदोषान् लभेतेत्यप्यविगणय्य तत्र नगर्यां योग्याः प्रौढा वारमुख्या वारवेश्याः 'अथ सा जनैः सत्कृता वारमुख्या स्यात्' इत्यमरः । कलासु कामकलास्वभिज्ञा इति समाज्ञापयति स्म आज्ञापयामास ॥ ५१ ॥

**ततो विशेषेण नरेन्द्रमार्गे स्वलङ्कृते चैव परीक्षिते च ।**
**व्यत्यस्य सूतं च रथं च राजा प्रस्थापयामास बहिः कुमारम् ॥ ५२ ॥**

तत इति । ततस्तदनन्तरं नरेन्द्रमार्गे राजमार्गे विशेषेणातिशयेन स्वलङ्कृते सुष्ठु अलङ्कृते ध्वजतोरणादिभिर्विभूषिते परीक्षिते कृतपरीक्षे चैव निर्वेदोत्पादकवस्तुपरिजिहीर्षया संशोधित इति यावत्, राजा शुद्धोदनः सूतं सारथिं रथञ्च व्यत्यस्य परिवर्त्य कुमारं पुत्रं बहिर्विहारभूमौ प्रस्थापयामास प्रेषयामास; कदाचित्पूर्वस्य सारथेरेव दोषेण कुमारस्य निर्वेदोत्पत्तिरभवदिति हेतोः सारथ्यादिपरिवर्तनम् ॥ ५२ ॥

**ततस्तथा गच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः ।**
**तं चैव मार्गे मृतमुह्यमानं सूतः कुमारश्च ददर्श नान्यः ॥ ५३ ॥**

तत इति । ततस्तदनन्तरं राजपुत्रे राजकुमारे तथा पूर्ववद् गच्छति सति तैरेव पूर्वोक्तैः सम्यग्दृष्टिभिर्देवैर्गतासुर्गता नष्टा असवः प्राणा यस्य सः, 'पुंसि भूम्न्यसवः प्राणाः, इत्यमरः । मृतः पुरुषो विहितो निर्ममे । मृतं गतासुं मार्गे तत्रैव राजमार्गे उह्यमानं शवरूपेण नीयमानं तञ्चैव तमेव देवनिर्मितं पुरुषं सूतः सारथिः कुमारो राजकुमारश्च ददर्श । देवमायाप्रभावादन्यस्तद्भिन्न एकोपि तं शवं न ददर्शेति भावः, केवलं सूतकुमारावेव तं शवमपश्यताम् ॥ ५३ ॥

**अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः ।**
**दीनैर्मनुष्यैरनुगम्यमानो यो भूषितश्चाप्यवरुद्यते च ॥ ५४ ॥**

अथेति । अथ देवनिर्मितमृतपुरुषदर्शनानन्तरं स राजसुतो राज्ञः पुत्रः सूतं सारथिम्

अब्रवीद् उक्तवान् । किमित्याह—क एष चतुर्भिर्नरैश्चतुःसंख्याकैः पुरुषैर्ह्रियते स्वस्कन्धेषु काष्ठफलकोपरि निधाय नीयते, यो भूषितः पुष्पमालाभिरलङ्कृतः यो दीनैः शोकातुरैर्मनुष्यैर्जनैरनुगम्यते यः अवरुद्येते यस्य कृते जना विलापं कुर्वन्तीति कीदृशोऽयं पुरुषः ॥ ५४ ॥

ततः स शुद्धात्मभिरेव देवैः शुद्धाधिवासैरभिभूतचेताः ।
अवाच्यमप्यर्थमिमं नियन्ता प्रव्याजहारार्थवदीश्वराय ॥ ५५ ॥

तत इति । ततः कुमारप्रश्नानन्तरं शुद्धात्मभिः शुद्धो निर्मलो रागद्वेषादिरहित आत्मा येषां तैः पुण्यान्तःकरणैः, शुद्धाधिवासैः शुद्धे पवित्रे स्वर्गेऽधिवासो निवासस्थानं येषां तैः, यद्वा शुद्धोऽधिवासः संस्कारो मनो वा येषां तैर्देवैरेव अभिभूतचेता अभिभूतमाक्रान्तं विवशीकृतं चेतो मनो यस्य स आक्रान्तचित्तः सन् स नियन्ता सारथिः 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । अवाच्यं संवेगोत्पादकत्वाद् वक्तुमयोग्यमपीमं वक्ष्यमाणमर्थम् अर्थवद् यथायथमीश्वराय प्रभवे कुमाराय प्रव्याजहार न्यवेदयत् ॥ ५५ ॥

बुद्धीन्द्रियप्राणगुणैर्वियुक्तः सुप्तो विसंज्ञस्तृणकाष्ठभूतः ।
संवर्ध्य संरक्ष्य च यत्नवद्भिः प्रियप्रियैस्त्यज्यत एष कोऽपि ॥ ५६ ॥

बुद्धीति । बुद्धीन्द्रियप्राणगुणैः बुद्धिर्मतिः, इन्द्रियाणि चक्षुरादीनि, प्राणा असवः, गुणाः शौर्यादयस्तैर्वियुक्तो विरहितः, अत एव तृणकाष्ठभूतः तृणैः काष्ठैर्वा सदृशः, सुप्तो दीर्घनिद्रां प्राप्त इति भावः । विसंज्ञः संज्ञारहितः एष कोऽपि कश्चित् पुरुषो मयाज्ञातकुलवासो यत्नवद्भिः सयत्नैः प्रियप्रियैरतिशयेन हितकारिभिर्मातृपितृसुतदारादिबान्धवैः संवर्ध्य वर्धयित्वा संरक्ष्य रक्षयित्वा च त्यज्यते स्वगृहाद् बहिः श्मशाने नीयते ॥ ५६ ॥

इति प्रणेतुः स निशम्य वाक्यं संचुक्षुभे किञ्चिदुवाच चैनम् ।
किं केवलोऽस्यैव जनस्य धर्मः सर्वप्रजानामयमीदृशोऽन्तः ॥ ५७ ॥

इतीति । शौद्धोदनी राजपुत्र इत्येवंरूपं सारथेः सूतस्य वाक्यं गिरं निशम्य श्रुत्वा संचुक्षुभे व्याकुलमना बभूव । एनं सारथिं किञ्चिदुवाच च उक्तवांश्च । किमित्याह—अस्यैव मृतस्य जनस्य केवलो धर्मो मरणरूपः किम् ? (उत) सर्वप्रजानां सर्वासां प्रजानाम् ईदृश एवंविधोऽयमन्तो नाशः किम् ? किमित्युभयत्रान्वयि ॥ ५७ ॥

ततः प्रणेता वदति स्म तस्मै सर्वप्रजानामिदमन्तकर्म ।
हीनस्य मध्यस्य महात्मनो वा सर्वस्य लोके नियतो विनाशः ॥ ५८ ॥

तत इति । ततः कुमारप्रश्नश्रवणानन्तरं सूतस्तस्मै कुमाराय वदति स्म अवोचत् । किं वदति स्मेत्याह । इदमन्तकर्म एषा मृत्युरूपा क्रिया सर्वप्रजानां सर्वेषां जनानामस्तीति शेषः । हीनस्य क्षुद्रस्य मध्यस्य मध्यमश्रेणीकस्य महात्मनो विशिष्टगुणयुक्तस्य साधोर्वा, किं बहुना सर्वस्य निखिलस्य चराचरप्राणिसमूहस्य लोकेऽस्मिन् जगति विनाशो मृत्युर्नियतोऽवश्यम्भावी । 'जातस्य हि ध्रुवो मृत्युः' इति सिद्धान्तादित्यर्थः ॥ ५८ ॥

ततः स धीरोऽपि नरेन्द्रसूनुः श्रुत्वैव मृत्युं विषसाद सद्यः ।
अंसेन संश्लिष्य च कूबराग्रं प्रोवाच निह्रादवता स्वरेण ॥ ५९ ॥

तत इति । ततः सूतवाक्यश्रवणानन्तरं धीरोऽपि गम्भीरोऽपि स नरेन्द्रसूनुः कुमारो मृत्युं सर्वप्राणिनियतं मरणं श्रुत्वाऽऽकर्ण्यैव सद्यस्तत्क्षणमेव विषसाद विषण्णो शोकविह्वलो बभूव। अंसेन स्कन्धेन कूबरस्य युगन्धरस्य 'कूबरस्तु युगन्धरः' इत्यमरः । अग्रं संश्लिष्य च अवलम्ब्य च निह्रादवता गाम्भीर्यवता विषादपूर्णेनेत्यर्थः, स्वरेण प्रोवाच प्रोक्तवान् ॥ ५९ ॥

**इयं च निष्ठा नियता प्रजानां प्रमाद्यति त्यक्तभयश्च लोकः ।**
**मनांसि शङ्के कठिनानि नृणां स्वस्थास्तथा ह्यध्वनि वर्तमानाः ॥ ६० ॥**

इयमिति । इयं पुरो दृश्यमाना मृत्युरूपा निष्ठा स्थितिः प्रजानां जनानां नियता निश्चिता। तथापि लोकःसर्वोऽपि जनस्त्यक्तभयो निर्भीकः सन् मरणभयादिति शेषः । तेषां हृदये त्रासश्च नोत्पद्यत इति भावः । प्रमाद्यति मृत्युविषये चिन्तां न करोति । अवश्यंभाविमृत्युदुःखपरिहार्य्य-साधनेषु विगतपरिश्रमो भवति । नृणां जनानां मनांसि चेतांसि कठिनानि कठोराणि शङ्के सम्भावयामि । हि यस्माद्धेतोः स्वस्था मरणचिन्तारहितास्सन्तस्तथा मार्गे इतस्ततो विचरन्तः स्वस्व-व्यापारे वर्तमाना विद्यन्त इत्यर्थः ॥ ६० ॥

**तस्माद्रथः सूत ! निवर्त्यतां नो विहारभूमेर्नहि देशकालः ।**
**जानन्विनाशं कथमार्तिकाले सचेतनः स्यादिह हि प्रमत्तः ॥ ६१ ॥**

तस्मादिति । हे सूत ! तस्माद् यतः सर्वप्राणिनां मृत्युर्नियतस्तस्माद्धेतोर्नोऽस्माकं रथो निवर्त्यतां परावर्त्यताम् । देशकालौ देशः स्थानं च कालः समयश्च तौ विहारयोग्यौ भ्रमणानुकूलौ न स्तः । 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति मेदिनी । तदेव स्पष्टयति—हि यतः सचेतनः सचेतनावान् प्राणी विनाशमात्मनो मरणं जानन् सन् आर्तिकाले दुःखकाल इति यावत् 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः । कथं प्रमत्तोऽवधानशून्यः स्यात् । दुःखावसरे को हि जनो विषयानुरक्तो भवेत्, तस्माद्विसदृशं ममैतद्बहिर्विहर्तुं प्रस्थानमिति भावः ॥ ६१ ॥

**इति ब्रुवाणेऽपि नराधिपात्मजे निवर्तयामास स नैव तं रथम् ।**
**विशेषयुक्तं तु नरेन्द्रशासनात्सपद्मषण्डं वनमेव निर्ययौ ॥ ६२ ॥**

इतीति । नराधिपात्मजे राजपुत्रे शुद्धोदनसूनौ इत्येवंप्रकारेण ब्रुवाणे सत्यपि कुमाराज्ञामुल्लङ्घ्य स सूतस्तं रथं नैव निवर्तयामास, किन्तु नरेन्द्रशासनाद् नरेन्द्रस्य राज्ञः शुद्धोदनस्य शासनाद् आदेशात् 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु' इति मेदिनी । विशेषयुक्तं विशेषैः शोभोत्पादकैः प्रकारैर्युक्तं सपद्मषण्डं पद्मानां कमलानां षण्डैः समूहैः सह वर्तमानम् 'अब्जादिकदम्बे षण्डमस्त्रियाम्' इत्यमरः । वनमुपवनमित्यर्थः, निर्ययौ निर्जगाम । वंशस्थं वृत्तम्, 'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणात् ॥ ६२ ॥

**ततः शिवं कुसुमितबालपादपं परिभ्रमत्प्रमुदितमत्तकोकिलम् ।**
**निपानवत्सकमलचारुदीर्घिकं ददर्श तद्वनमिव नन्दनं वनम् ॥ ६३ ॥**

तत इति । ततः वनगमनानन्तरं स राजपुत्रः शिवं शुभं कल्याणकरं 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । कुसुमितबालपादपं कुसुमिताः प्रफुल्लिता बालाःपादपा

वृक्षा यस्मिंस्तत्तथाभूतम्, कुसुमितमित्यत्र 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्। परिभ्रमत्प्रमुदितमत्तकोकिलं परिभ्रमन्त इतस्ततः सञ्चरन्तः प्रमुदिता हृष्टा मत्ता उन्मत्ताः कोकिलाः पिका यस्मिंस्तत्, निपानवत् नियतं पिबन्ति जलमत्रेति निपानं जलाशयस्तद्वत् तद्विशिष्टम् 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः। कमलचारुदीर्घिकं कमलैश्चार्व्यो मनोहरा दीर्घिका वाप्यो यस्मिंस्तत् तद्वनं नन्दनं वनमिव ददर्श अद्राक्षीत्। रुचिरा ॥ ६३ ॥

**वराङ्गनागणकलिलं नृपात्मजस्ततो बलाद्वनमतिनीयते स्म तत्।**
**वराप्सरोवृतमलकाधिपालयं नवव्रतो मुनिरिव विघ्नकातरः ॥ ६४ ॥**

वराङ्गनेति। ततस्तदनन्तरं वराप्सरोऽन्वितं वराः श्रेष्ठाश्च ता अप्सरसः स्वर्वेश्याश्च ताभिरन्वितं व्याप्तमित्यर्थः, अलकाधिपालयम् अलका कुबेरपुरी 'अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' इत्यमरः। तस्या अधिपः स्वामी कुबेरस्तस्य आलयो निवासस्थानम् 'गृहाः पुंसि च भूम्न्येव निकायनिलयाः' इत्यमरः। तम्। नवव्रतो नवो व्रतस्तपश्चरणरूपः 'नियमो व्रतमस्त्री' इत्यमरः। यस्य सः, विघ्नकातरः विघ्ना अन्तरायाः 'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः' इति पातञ्जले। तैः कातरो भीरुः 'अधीरे कातरस्त्रस्तभीरुभीरुकभीलुकाः' इत्यमरः। मुनिरिव योगीव नृपात्मजः शौद्धोदनिस्तद् वराङ्गनागणकलिलं वराश्च ता अङ्गनाश्चेति वराङ्गनाः श्रेष्ठस्त्रियस्ताभिः कलिलं गहनं मिश्रम्' इत्युणादिकोशः। वनमभि वनं प्रति 'अभिरभागे' इति कर्मप्रवचनीयत्वे 'कर्मप्रवचनीययुक्ते' इति द्वितीया। बलात् तदिच्छाविरुद्धमित्यर्थः। नीयते स्म सारथिनेति शेषः। रुचिरा ॥ ६४ ॥

इति बुद्धचरिते महाकाव्ये संवेगोत्पत्तिर्नाम तृतीयः सर्गः।

---

# अथ महाकविकालिदासविरचिते

## कुमारसम्भवे तृतीयः सर्गः।

**श्रीः**

**तस्मिन् मघोनस्त्रिदशान् विहाय सहस्रमक्ष्णां युगपत् पपात।**
**प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥**

तस्मिन्निति। मघोनः इन्द्रस्य अक्ष्णां सहस्रम्, त्रिरावृत्ता दश परिमाणमेषामिति त्रिदशान् देवान्। "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये (पा० २. २. २५) इति बहुव्रीहिः। "बहुव्रीहौ संख्येये०" (पा० ५. ४. ७३) इत्यादिना डच् प्रत्ययः, उक्तार्थत्वात् सुचो निवृत्तिः। विहाय त्यक्त्वा तस्मिन् कामे युगपत् सहसा पपात। सहस्रेणाक्षिभिरद्राक्षी

इत्यादरातिशयोक्तिः। ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन् पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति—प्रायो भूम्ना प्रभूणामाश्रितेषु सेवकेषु विषयगौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं चञ्चलम्। फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भाव इति मल्लिनाथः॥ १॥

यदा यत्र प्रयोजनं तदा तत्रैव गौरवं स्यादित्यर्थः। अत्र शङ्करस्य तपोभङ्गः प्रयोजनम्। स च कामस्य साध्यो न त्वन्यस्य, अतः काम एव गौरवं न तु देवान्तर इति नारायणः॥ १॥

**स वासवेनाऽऽसनसन्निकृष्टमितो निषीदेति विसृष्टभूमिः।**
**भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम्॥ २॥**

स इति। स कामो वासवेनेन्द्रेणासनस्य सिंहासनस्य सन्निकृष्टं सन्निहितमासनसन्निकृष्टं यथा तथा। शेषषष्ठ्याऽयं समासः, कृद्योगलक्षणया तु न; "न लोकाव्ययनिष्ठाखलर्थतृणाम्" (पा० २. ३. ६९) इति षष्ठीनिषेधात्। इतो निषीदेहोपविशेति विसृष्टभूमिर्दत्तावकाशः सन् भर्तुः स्वामिनः प्रसादमनुग्रहं मूर्ध्ना प्रतिनन्द्य सम्भाव्य शिरसा गृहीत्वेति यावत् मिथो रहसि, "मिथोऽन्योन्यं रहस्यपि" इत्यमरः। एनमिन्द्रमेवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमत उपक्रान्तवान्। "प्रोपाभ्यां समर्थाभ्याम्" (पा० १. ३. ४२.) इत्यात्मनेपदमिति मल्लिनाथः॥ २॥

आसनसन्निकृष्टमिति आहिताग्न्यादिषु पाठात् साधु। विसृष्टा दत्ता भूमिर्यस्मै स तथा। पूर्वं कामदेवाधिष्ठितात् प्रदेशादारभ्याऽऽत्मसिंहासनपर्यन्तं स्वहस्तेनैवाऽऽहूय तत्र दत्तावस्थानप्रदेश इत्यर्थ इति नारायणः॥ २॥

**आज्ञापय ज्ञातविशेष! पुंसां लोकेषु यत्ते करणीयमस्ति।**
**अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्द्धितमाज्ञया ते॥ ३॥**

आज्ञापयेति। हे पुंसां ज्ञातविशेष ज्ञातसार, ज्ञातपुंविशेषेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। आज्ञापय, तदिति शेषः। उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः। किं तदित्याह—लोकेषु ते तव यत् कारणीयं कर्तव्यमस्ति। संस्मरणेन प्रवृत्तमुत्पन्नं ते तवानुग्रहं प्रसादमाज्ञया नियोगेन संवर्द्धितं वृद्धिं गमितमिच्छामि। संस्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्द्धय क्वचित् कर्मणि नियुङ्क्ष्वेत्यर्थः, अन्यथा मे नास्ति परितोष इति भावः। तुमुन्नन्तपाठे णिजर्थे यत्नः कार्य इति मल्लिनाथः॥ ३॥

पुंसां ज्ञातविशेषेत्यनेनाऽऽमन्त्रणेन मत्सामर्थ्यविशेषमवधार्य खलु भवताऽहं स्मृतः। तस्मान्मदुचिते कार्ये मामाज्ञापयेति ध्वन्यते। 'यो यस्मिन् कर्मणि कुशलस्तं तस्मिन्नेव योजयेत्' इति न्यायादिति भावः। सर्वलोकाधिपतेस्तव योऽनुग्रहः संस्मरणेन मय्यङ्कुरितोऽभूत् तमहमाज्ञया वर्द्धमानमिच्छामीत्यर्थ इति नारायणः॥ ३॥

**केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः।**
**यावद् भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती॥ ४॥**

न च मे किञ्चिदसाध्यमस्तीत्याह—केनेति। पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा

नितान्तदीर्घैरतिप्रभूतैस्तपोभिस्ते तव अभ्यसूयेर्ष्या जनिता, तं ब्रूहीति शेषः। किमर्थम् ? यावद् यतः स भवद्वैरी आहितसायकस्य संहितबाणस्यास्य मत्कार्मुकस्य निदेशे वर्तत इति निदेशवर्ती आज्ञावशो भवति अविलम्बेनैव भविष्यतीत्यर्थः। "वर्तमानसामीप्ये वर्तमानवद् वा" ( पा० ३. ३. १३१ ) इति लट् इति मल्लिनाथः ॥ ४ ॥

पदं स्थानं काङ्क्षितुं शीलमस्येति तथा। त्रैलोक्ये कः पुमान् बहुकालकृतैस्तपोभिस्त्वां दूरतो निराकृत्य स्वयमेवामरावतीमधिष्ठाय माहेन्द्रं पदमेवानुभवामीति कृतोद्योगस्तवासूयां जनयतीत्यर्थः, त्वरितं वदेति शेषः। यावद् भवतीति 'यावत्पुरानिपातयोर्लट्' (पा० ३. ३. ४) इति भविष्यदर्थे लट्। आहितसायकस्येत्यनेन विशेषणेन कार्मुकस्य शरसन्धानव्यतिरिक्तकारणान्तरनिरपेक्षत्वं ध्वनितमिति नारायणः ॥ ४ ॥*

**अध्यापितस्योशनसाऽपि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते।**
**कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ५ ॥**

धर्मार्थविधिकृत्याऽऽह—अध्यापितस्येति। उशनसा शुक्रेण नीतिं नीतिशास्त्रमध्यापितस्यापि। अपिशब्दाच् शुक्रशिष्याणामप्रधृष्यत्वं गम्यते। "गतिबुद्धि०" ( पा० १. ४. ५२ ) इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तादप्रधाने कर्मणि क्तः "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति वचनात्। ते द्विषस्तव शत्रोः कस्यार्थधर्मौ, प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम्। "प्रणिधिः प्रार्थने चरे" इति यादवः। प्रवृद्ध ओघः प्रवाहः सिन्धोर्नद्यास्तटाविव पीडयामि वद, इति मल्लिनाथः ॥ ५ ॥

पीडयामि विनाशयेयम्। प्रश्ने लोट्। 'उशना भार्गवः कविः' इत्यमरः। उशनस एव नीतिशास्त्रप्रावीण्यमिति प्रसिद्धं 'न कश्चिन्नापनयते पुमानन्यत्र भार्गवात्' 'भार्गवेण समो नये' इत्यादिषु। अर्थपालन इव धर्मपालनेऽपि नीतेरेव साधनत्वप्रसिद्धेरेवमुक्तम्। मम नीतिरौशनसीमपि नीतिं जेतुं क्षमेति भावः। अतिप्रवृद्धो हि विषयाभिलाषः सर्वानपि पुरुषार्थान् विघटयितुं क्षम इति भावः। यथा प्रवृद्धो जलप्रवाहः सिन्धोस्तटद्वयं विघटयति तथाऽहं कस्यार्थधर्मौ विघटयेयमिति त्वरितमेव वदेत्यर्थः। त्रैलोक्ये कः पुरुषो धर्मार्थाभ्यामुपायाभ्यां त्वां जेतुमुद्योगं करोति। अहं तस्यार्थधर्मयोः काम एवोपयोगं विधास्यामीति भाव इति नारायणः ॥ ५ ॥

**प्रसीद विश्राम्यतु वीर ! वज्रं शरैर्मदीयैः कतमः सुरारिः।**
**बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ६ ॥**

प्रसीदेति। हे वीर ! प्रसीद प्रसन्नो भव, वज्रं कुलिशं विश्राम्यतु उदास्तामित्यर्थः, निर्व्यापारस्तिष्ठत्विति भावः। मदीयैः शरैर्मोघीकृतबाहुवीर्यो विफलीकृतभुजशक्तिः कतमो दैत्यदानवादिषु, यः कश्चन सुरारिः 'वा बहूनां जातिपरिप्रश्ने डतमच्' ( पा० ५. ३. ९३ ) इति डतमच्प्रत्ययः। कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु, किमु वक्तव्यं पुंभ्य इत्यर्थः। सकृद्

*इत आरभ्य शृङ्गाराभासमयाः श्लोकाः परिहृताः। सङ्ख्याक्रमश्च पूर्वागतसङ्ख्याऽविरोधेनास्मद्विहित एवेति।

भीतः सर्वतो बिभेतीति भावः । 'भीत्रार्थानां भयहेतुः' ( पा० १. ४. २५ ) इत्यपादानत्वात् पञ्चमी । इति मल्लिनाथः ॥ ६ ॥

अथ शस्त्रसाध्यं शत्रुविजयमप्यहमेव करिष्यामीत्याह—प्रसीदेति । अत्र वीरेति सम्बुद्ध्या त्वद्भृत्येन मया विजितेष्वपि शत्रुषु तव वीरत्वहानिर्नास्तीति द्योत्यते । प्रसीद शत्रुविजये मामाज्ञापयेत्यर्थः । त्रिभुवनकण्टकोद्धरणार्थमनवरतवृत्तिकं तव वज्रमात्मभारं मद्बाणेषु निधाय परिश्रमापनोदनार्थं कञ्चित्कालं विश्राम्यतु विश्रान्तिं लभतामित्यर्थः । रोषकृतेनाधरस्फुरणमात्रेणापि बिभेतु किं पुनर्वचनादिनेति भाव इति नारायणः ॥ ६ ॥

**तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।**
**कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ ७ ॥**

तवेति । किं बहुना, तव प्रसादादनुग्रहात् कुसुमायुधोऽप्यतिदुर्बलास्त्रोऽपि अहमेकं मधुं वसन्तमेव सहायं लब्ध्वा, पिनाकः पाणौ यस्य स पिनाकपाणिः, 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' ( २. २. ३६ पा० वा० ) तस्य हरस्यापि । हरः पिनाकी चेत्यतिदारुण इति भावः । धैर्यच्युतिं धैर्यहानिं कुर्यां कर्तुं शक्नुयामित्यर्थः । 'शकि लिङ् च' (पा० ३. ३. १७२) इति शक्यार्थे लिङ् । अन्ये धन्विनो धनुर्भृतो मम के न केऽपीत्यर्थः । किंशब्दः कुत्सायाम् । "कुत्साप्रश्नवितर्केषु बुधैः किंशब्द इष्यते" इति शाश्वतम् इति मल्लिनाथः ॥ ७ ॥

इत्थं विकत्थनोदीर्णदर्पः कन्दर्पस्तेषां मन्त्रमजानन्नपि परमदुःसाध्येऽपि देवकार्ये स्वसामर्थ्यप्रकटनं कुर्वन् गर्वोद्धतः सर्वातिशायितामात्मनः प्रदर्शयति—तवेति । कुसुमायुध इत्यनेनात्यन्तदुर्बलसाधनत्वमात्मनो दर्शितम् । ननु तथाविधस्य तव कथं तादृशे कार्ये सामर्थ्यमित्यत्राऽह—तव प्रसादादिति । तत्तादृशो हि प्रभूणां प्रभावः, यदेते नितान्तहीनबलमपि भृत्यं निजाज्ञया बलवत्तरं कुर्वन्ति । यथा शाकुन्तले—

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां निहन्ता
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत ॥ (७।४)

इत्यनेन वचनेनाऽऽत्मप्रशंसानिमित्तकोपपरिहारार्थमौद्धत्यपरिहारः कृत इत्यवसेयम् । 'पिनाकः शूलिनो धनुः' इति भोजः । हरस्य हरतीति हरः, चतुर्दशभुवनसंहर्तुरपीत्यर्थः । 'प्रचुरतमसे तत्संहर्त्रे हराय नमो नमः' इति वचनात् । अपिशब्देन हरस्य लोकोत्तरत्वमुक्तम्, धृतपिनाकस्य हरस्य जयेऽपि समर्थस्य ममाऽन्येषां धन्विनां जयः पुनरीषत्कर एवेत्याह—ममान्ये धन्विनः के इति । किंशब्दः क्षेपे, न केऽपीत्यर्थः । अन्ये तृणसमाना एवेति भाव इति नारायणः ॥ ७ ॥

**अथोरुदेशादवतार्य पादमाक्रान्तिसम्भावितपादपीठम्**
**सङ्कल्पितार्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥ ८ ॥**

अथेति । अथ स्मरवाक्यश्रवणानन्तरमाखण्डलः सहस्राक्षः, ऊरुदेशात् पादमाक्रान्त्याऽऽक्रमणेन सम्भावितं पादपीठं यस्मिंस्तद् यथा तथाऽवतार्य, सङ्कल्पितार्थे हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिं 'कुर्यां हरस्यापि' इत्यादिना प्रकटीकृतस्वसामर्थ्यं कामं स्मरमिदं वक्ष्यमाणं बभाष इति मल्लिनाथः ॥ ८ ॥

अत्राऽऽखण्डलशब्देन विश्वोत्तरत्वमिन्द्रस्य द्योत्यते । अखण्डमैश्वर्यं ज्ञानं वा लाति गृह्णातीत्यखण्डलः, स एव आखण्डलः 'अन्येषामपि दृश्यते' (पा० ६. ३. १३७) इति दीर्घः, पृषोदरादिसूत्रेण वा स्वामिनः पादविन्यास एव हि पादपीठस्यानुग्रह इति भावः । हृदयस्थितं कार्यतत्त्वमवधार्य तत्सम्पादननिपुणा हि भृत्याः प्रभूणामादरपदमिति भाव इति नारायणः ॥ ८ ॥

**सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।**
**वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ ९ ॥**

सर्वमिति । हे सखे, सखे इति सम्बोधनं गौरवार्थम् । सर्वमेतत् त्वय्युपपन्नं सिद्धम्, मम कुलिशं वज्रं भवांश्चोभेऽस्त्रे, तद् वज्रं तपोवीर्येण तपोबलेन प्रबलेषु कुण्ठं प्रतिबद्धप्रसरम्, त्वमस्त्रं सर्वतोगामि च साधकं च, तापसेष्वप्यकुण्ठमित्यर्थ इति मल्लिनाथः ॥ ९ ॥

**अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।**
**व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ १० ॥**

अवैमीति । हे सखे, ते सारं बलमवैमि वेद्मि, अतः खलु अत एवात्मसमं मत्तुल्यं त्वां गुरुणि महति कार्ये "तस्मै हिमाद्रेः" इति वक्ष्यमाणे नियोक्ष्ये । 'स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' (पा० वा० १. ३. ६४) इति वार्तिकाद् आत्मनेपदनियमः । तथा हि सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह—कृष्णेन विष्णुना, धरतीति धरः, पचाद्यच् । भुवो धरो भूधरः, तस्य भावस्तत्तां भूधरणशक्तिमित्यर्थः, अवेक्ष्य ज्ञात्वा शेषः सर्पराजो देहोद्वहनाय स्वदेहमुद्वोढुम्, 'क्रियार्थोपपदस्य०' (पा० २. ३. १४) इत्यादिना चतुर्थी । व्यादिश्यते नियुज्यते । शेषशायी हि भगवानिति मल्लिनाथः ॥ १० ॥

"सारो बले स्थिरांशे च" इत्यमरः । न केवलं तव वीर्यवत्त्वमात्रम्, अपि तु अनुरक्तत्वं निर्व्याजत्वं चास्तीत्याह—आत्मसममिति । 'तस्य दण्डवतो दण्डः स्वदेहान्न विशिष्यते' (१७।६२) इति रघुवंशोक्तः प्रकारोऽनेन दर्शितः । 'अनुरक्तः शुचिर्दक्षः' इत्यादयोऽमात्यगुणाश्च प्रतिपादिताः । सर्वामात्यगुणविशिष्टे त्वयि स्थिते सति कमन्यमीदृशे कार्ये नियोक्ष्य इति भाव इति नारायणः ॥ १० ॥

**आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।**
**निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥ ११ ॥**

नियोगाङ्गीकारं सिद्धवत्कर्तुमाह—आशंसतेति । वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता 'कुर्यां हरस्यापि पिनाकपाणेः' इत्यादिनेति शेषः, त्वया नोऽस्माकं कार्यं प्रतिपन्नकल्पमङ्गीकृतप्रायम् । 'ईषदसमाप्तौ०' (पा० ५.३.६७) इति कल्पप्प्रत्ययः । कथमेतत् ? अत आह

इदानीमुच्चैरुन्नता द्विषो येषां तेषामुच्चैर्द्विषां यज्ञांशभुजां देवानाम् । एतेन द्विषल्लुप्तयज्ञभागत्वं सूच्यते। ईप्सितमाप्तुमिष्टमेतदेव हरे बाणप्रयोगरूपमेव निबोध, हरायत्तं बुध्यस्वेत्यर्थः । बुध बोधने इति धातोर्लोट् । अत्राशंसता प्रार्थयमानेनेति नाथव्याख्यानमनाथव्याख्यानम् । आङ्पूर्वयोः शास्ति-शंसत्योरिच्छार्थत्व आत्मनेपदनियमात् याच्ञार्थस्याप्रमाणिकत्वात् ,¦ कुर्यां हरस्यापीत्यत्रानयोरभावादयोगाच्चेति मल्लिनाथः ॥ ११ ॥

"कुर्यां हरस्यापि पिनाकपाणेः" इति वदता त्वया मन्नियोगः प्रायेणाङ्गीकृत एवेत्याह—आशंसतेति । इति नारायणः ॥ ११ ॥

**अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।**
**स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १२ ॥**

किन्तत् कार्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षा ? इत्यत्राऽऽह—अमी इति । हि यस्मात् अमी देवा जयाय शत्रुजयार्थं भवस्य हरस्य वीर्यप्रभवं तेजःसम्भूतं सेनान्यं सेनापतिमुशन्ति कामयन्ते, 'वश कान्तौ' इति धातोर्लट् । ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां ( च ) भूः स्थानं ब्रह्माङ्गभूः कृतमन्त्रन्यास इत्यर्थः, ब्रह्मणि निजतत्त्वे, 'वेदस्तत्त्वं तपो ब्रह्म' इत्युभयत्राप्यमरः, योजितात्मा नियमितचित्तो मन्त्रन्यासपूर्वकं ब्रह्म ध्यायन्नित्यर्थः । स भवश्च त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः, अनन्यसाध्योऽयमस्मिन्नवसर इति भाव इति मल्लिनाथः ॥ १२ ॥

ब्रह्माङ्गभूरिति ब्रह्मा सकलजगन्निर्माणकर्मठो विधिरेवाङ्गभूस्तनयो यस्य स तथा । श्रुतिसिद्धश्चायमर्थः । वक्ष्यति च—'यमामनन्त्यात्मभुवोऽपि कारणम्' इति नारायणः ॥ १२ ॥

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ॥ १३ ॥**

तस्मा इति । यतात्मने नियतचित्ताय तस्मै भवाय 'रुच्यर्थानां प्रीयमाणः' (पा० २.४.३३) इति सम्प्रदानत्वाच्चतुर्थी । प्रयतां हिमाद्रेस्तनूजां पार्वतीं रोचयितुं यतस्वेति मल्लिनाथः ॥ १३ ॥

**गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥ १४ ॥**

साऽपीदानीं सन्निकृष्टैव तस्येत्याह—गुरोरिति । नगेन्द्रकन्या पार्वती च गुरोः पितुर्नियोगात् शासनात् अधित्यकायां हिमाद्रेरूर्ध्वभूमौ 'भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (पा० ५.२.३४) इति त्यकन्प्रत्ययः । तपस्यन्तं तपश्चरन्तम् । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (पा० ३.१.१५) इति क्यङ्प्रत्ययः, ततः शतृप्रत्ययः । स्थाणुं रुद्रम् अन्वास्त उपास्त इत्यर्थः । इदं मयाऽप्सरसां मुखेभ्यः श्रुतम् । न च एतदैतिह्यमात्रमित्याह—स वर्गः सोऽप्सरसां गणः, मत्प्रणिधिर्मम गूढचरः । 'प्रणिधिः प्रार्थने चरे' इति यादव इति मल्लिनाथः ॥ १४ ॥

ननु हिमाद्रौ वर्तते, सा पार्वती, हरस्तु कैलासशिखरे, अतः कथं तयोः परस्परसन्दर्शनोपपत्तिः, कथं वा परस्परसन्दर्शनेन विना रुचिमुत्पादयेयमित्यत्राऽऽह—गुरोरिति । नन्वनृतवा-

दिन्यो हि स्त्रियः, अतः कथं तद्वचस्सु विश्वासः ? अत आह—स वर्गो मत्प्रणिधिरिति । 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः' इत्यमरः । चारवचस्सु विश्वासो युक्त एव 'चारैः पश्यन्ति राजानः' इत्युक्तत्वादिति नारायणः ॥ १४ ॥

**तद् गच्छ सिद्धयै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।**
**अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १५ ॥**

तदिति । तत् तस्मात् सिद्धयै कार्यसिद्धयर्थं गच्छ, देवकार्यं कुरु, आशिषि लोट् । अयमर्थः प्रयोजनमर्थान्तरभाव्यः कारणान्तरसाध्य एव । तच्च कारणान्तरं पार्वतीसन्निधानमिति भावः । 'अर्थः प्रकारे विषये चित्तकारणवस्तुषु । अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने' इति विश्वः । तथाऽपि बीजसाध्योऽङ्कुर उदयात् उत्पत्तेः प्राक् अम्भ इव त्वामुत्तमं प्रत्ययं कारणमपेक्षते । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति मल्लिनाथः ॥ १५ ॥

ननु यदि देवसन्निधावेव देवी विद्यते तर्हि सा स्वभावसुभगया निजशरीरसुषमयैव देवहृदयमाक्रष्टुं क्षमा, किमस्मद्गमनेन ? अत आह—अर्थान्तरभाव्य एवायमर्थ उत्तमं प्रत्ययं त्वामपेक्षत इति । अर्थान्तरभाव्योऽर्थान्तरेण त्वद्व्यतिरिक्तेन देवीसन्निधानादिलक्षणेन भाव्य उत्पाद्य एव सन्नपि । एवशब्दः कामदेवस्य प्रयासाधिक्यं वारयति । अयं हरवशीकरणरूपोऽर्थः प्रयोजनं त्वामपेक्षते, हरचित्ताकर्षणरूपं देवकार्यं देवीसन्निधानादिभिः साध्यमपि प्रकृष्टकारणत्वेन त्वां प्रतिपालयतीत्यर्थः । अत्रोपमां दर्शयति—बीजाङ्कुर इवेति । न हि जलमन्तरेण क्षितिपवनादिसंयुक्ताद् बीजादङ्कुरोत्पत्तिरिति भाव इति नारायणः ॥ १५ ॥

**तस्मिन् सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।**
**अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥ १६ ॥**

तस्मिन्निति । सुराणां विजयाभ्युपाये जयस्योपायभूते तस्मिन् हरे अस्त्रगतिरस्त्रप्रसरस्तवैव नाम । नामेति सम्भावनायाम् । अन्येषान्तु सम्भावनाऽपि नास्तीति भावः । अतस्त्वं कृती कृतमस्यास्तीति कृती कृतार्थः । तथा हि अप्रसिद्धमपि अनन्यसाधारणमेव कर्म पुंसां यशसे हि । इदन्तु प्रसिद्धमसाधारणं चेति, अतियशस्करमिति भाव इति मल्लिनाथः ॥ १६ ॥

इत्थं कामदेवं नियुज्य तमेव प्रोत्साहयत्यस्मिन्नित्यादिना श्लोकत्रयेण । अस्मिन्निति । अप्रसिद्धं यत् किञ्चित् कर्मापि तस्यैव तत्र सामर्थ्यमिति व्यवस्थिते सति पुंसां यशस्करं भवति । परमेश्वरचित्ताकर्षणलक्षणमिदन्तु कर्मान्यैर्दुष्करं सुप्रसिद्धं चेति भवानतिमहतो यशसो भाजनं भविष्यत्येवेति भाव इति नारायणः ॥ १६ ॥

**सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।**
**चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥ १७ ॥**

प्रोत्साहनार्थं स्तौति—सुरा इति । एते सुराः समभ्यर्थयितारो याचितारः । कार्यं प्रयोजनं त्रयाणां विष्टापानामपि सम्बन्धि, सर्वलोकार्थमित्यर्थः, कर्म ते तव चापेन न त्वन्येनेति भावः ।

अतिहिंस्रमतिघातुकश्च न। अहो बतेति सम्बोधने। 'अहो बतानुकम्पायां खेदे सम्बोधनेऽपि च' इति विश्वः। अथवा, अहो आश्चर्ये बतेत्यामन्त्रणे सन्तोषे चेति, 'बताऽऽमन्त्रणसन्तोषखेदानुक्रोशविस्मये' इति विश्वः। स्पृहणीयवीर्योऽसि आश्चर्यविक्रमोऽसि। 'आश्चर्यं स्पृहणीयञ्च' इति नानार्थकोष इति मल्लिनाथः ॥ १७ ॥

सर्वेषामपि चापेन क्रियमाणं कर्म शरीरनाशकत्वेन हिंस्रमेव भवति, तव तु तपोमात्रहिंसया नात्यन्तहिंस्रमिति भावः। स्पृहणीयमभिलषणीयं वीर्यं यस्य स तथा। ममाप्येवंविधं वीर्यं भूयादिति सर्वैरप्यभिलषणीयवीर्योऽसीत्यर्थः, अभिनन्द्यवीर्योऽसीति वेति नारायणः ॥ १७ ॥

**मधुश्च ते मन्मथ ! साहचर्यादसावनुक्तोऽपि सहाय एव।**
**समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥ १८ ॥**

मधुश्चेति। हे मन्मथ, असौ मधुश्च वसन्तोऽपि ते साहचर्यात् सहचरत्वादेवानुक्तोऽपि अप्रेरितोऽपि सहायः सहकार्येव। तथाहि समीरणो वायुर्हुताशनस्याग्नेर्नोदयिता प्रेरको भवेति केन व्यादिश्यते ? अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्मः, स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथग् निर्दिष्ट इति प्रतिवस्तूपमालङ्कारोऽयम्। तदुक्तम्—

"यत्र सामान्यनिर्देशः पृथग् वाक्यद्वये यदि।
गम्यौपम्याश्रिता सा स्यात् प्रतिवस्तूपमा मता ॥" इति मल्लिनाथः ॥ १८ ॥

सहैव चरतीति सहचरः, तस्य भावः साहचर्यं ( तस्मात् ) सख्यादित्यर्थः। अत्रोक्तिभङ्ग्या वसन्तस्य नियोग एवोक्त इति पर्यायोक्त्यलङ्कार इति नारायणः ॥ १८ ॥

**तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे।**
**ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ १९ ॥**

तथेति। तथाऽस्त्विति भर्तुः स्वामिन आज्ञां शेषामिव प्रसाददत्तां मालामिव 'प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता' इति विश्वः। 'माल्याक्षतादिदाने स्त्री शेषा' इति वैजयन्तीकेशवौ। मूर्ध्ना आदाय शिरसा गृहीत्वा मदनः प्रतस्थे। 'समवप्रविभ्यः स्थः' ( पा० १. ३. २२ ) इत्यात्मनेपदम्। इन्द्र ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श, हस्तस्पर्शेन सम्भावयामासेत्यर्थः। शेषामिव आज्ञामित्यत्र साधकबाधकप्रमाणाभावाद् उपमोत्प्रेक्षयोः सन्देहसङ्कर इति। यदि भर्त्रा शेषाऽपि दत्ता तदा तामाज्ञामिवेत्युपमा। अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता। शेषादानन्तु सन्दिग्धमिति मल्लिनाथः ॥ १९ ॥

मदनो महेन्द्राज्ञां प्रस्थानादिसमये बन्धुभिर्दीयमानं माल्याक्षतादिकमिव शिरसा समादाय प्रस्थानोद्यमं चकारेत्यर्थः। गजाश्वानां युद्धारम्भादावुद्धर्षणार्थं यदाहननं तदिहाऽऽस्फालनशब्देनोच्यते। अनेन विशेषणेनात्रापि स्पर्शनस्योद्धर्षणार्थत्वं द्योत्यत इति नारायणः ॥ १९ ॥

**स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः।**
**अङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥ २० ॥**

स इति। स मदनोऽभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च

साशङ्कमतिसङ्कटमापतितमिति सभयमनुप्रयातः सन्, तथाऽङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः, शीर्त्वा मृत्वाऽपि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः, हैमवतं हिमवति भवं स्थाणो रुद्रस्याश्रमं जगामेति मल्लिनाथः ॥ २० ॥

रतेरनुप्रयाणे हेतुमाह—साशङ्कमिति। आशङ्कासहितं यथा भवति तथाऽनुप्रयात इत्यर्थः। अत्र पतिव्रतात्वात् परमेश्वरप्रभावज्ञानम्। तेन च परमेश्वरतपोविघ्नमाचरन्नयं मे भर्ता कथं भविष्यतीत्याशङ्का, तया चानुप्रयाणम्। एवंविधे महति जीवितसंशये नैनमहं जह्याम्। यद्यसावसून् परित्यक्ष्यति, तर्हि तदैव मत्प्राणनाथमनुकर्तुमनुजानातु मां परमेश्वर इत्यादिचिन्ताकुलया रत्या च शनैः शनैरनुगत इत्यर्थः। यः सकृदपि ध्यातः कीर्तितो वा जन्मसहस्रसञ्चितमपि पापमपहाय मुक्तिमेव प्रयच्छति, यो वा स्वपरिपन्थिनस्त्रिपुरादीनपि क्षणेन भस्मसादकरोत्, तस्य देवस्य समाधिभङ्गे प्रवृत्तस्य मदनस्य स्वशरीरनाशादन्यत्किं वा फलं भविष्यति। तस्मादङ्गव्ययार्थमेवास्य तत्समाधिभङ्गाकाङ्क्षा। अहो मदनस्य मोहातिशय इति भाव इति नारायणः ॥ २० ॥

**तस्मिन् वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती।**
**सङ्कल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥ २१ ॥**

तस्मिन्निति। तस्मिन् वने स्थाणवाश्रमे संयमिनां समाधिमतां मुनीनां तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तत इति प्रतिकूलवर्ती विरोधी मधुर्वसन्तः सङ्कल्पयोनेर्मनोभवस्याभिमानभूतं गर्वहेतुभूतमित्यर्थः। कार्यकारणयोरभेदोपचारः। आत्मानं निजस्वरूपमाधाय सन्निधाय जजृम्भे प्रादुर्बभूव, वसन्तधर्मान् प्रवर्तयामासेत्यर्थ इति मल्लिनाथः ॥ २१ ॥

मुनीनामित्यनेन मधोर्मुनिसामान्यसमाधिभेदनसामर्थ्यप्रतिपादनेन परमेश्वराकर्षविषयः प्रयासो निष्फल एवेति व्यज्यते। अन्यथा मुनिशब्दमपहाय तपःसमाधिप्रतिकूलवृत्तिरित्येवोच्येतेति नारायणः ॥ २१ ॥

**कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।**
**दिग् दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २२ ॥**

वसन्तधर्ममाह—कुबेरेति। उष्णरश्मौ सूर्ये····समयं दक्षिणायनकालं····विलङ्घ्याकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचिद् रक्षिताञ्च दिशमुदीचीं····गन्तुं चलितुं····प्रवृत्ते सति, दक्षिणा दिक्····। मुखेनाग्रभागेण····। वहतीति वहः, पचाद्यच्। गन्धस्य वहं गन्धवहमनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव "दुःखे विलक्षे व्यलीकमप्रियाकार्ययोस्तु ना" इति वैजयन्ती। उत्ससर्ज प्रवर्तयामास। स्वभर्तरि समयोल्लङ्घनेन···· प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिञ्चिद्वदा दुःखान्निश्वसन्तीति भावः। उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः। अत्रोत्प्रेक्षालङ्कारः। न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यम्, केवलविशेषणसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोत्तिष्ठते, अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते। न च श्लेष एव प्रकृताप्रकृतविषयः, उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात्, तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः। स च व्यलीकनिश्वासरूपचेतनधर्मसम्भावनार्थं दक्षिणस्या दिशो

नायिकया सहाभेदमापादयन् अभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति "वाच्यसिद्ध्यङ्गभूत०" इत्युत्पश्याम इति मल्लिनाथः ॥ २२ ॥

अथ वसन्तागमनकोलाहलं वक्तुमुपक्रान्तः प्रथमं मलयमारुतप्रवृत्तिं वर्णयति-कुबेरेति, इति नारायणः ॥ २२ ॥

**असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ॥ २३ ॥**

असूतेति। अशोको वृक्षविशेषः, सद्यः स्कन्धात् प्रकाण्डात् प्रभृत्येव स्कन्धादारभ्येत्यर्थः। भाष्यकारवचनात् प्रभृतियोगे पञ्चमीति कैयटः। भाष्यञ्च "मूलात् प्रभृत्यग्राद् वृक्षांस्तद्गुणवन्ति" इति "कार्तिक्याः प्रभृति आग्रहायणीमासे" इत्यादि। सपल्लवानि कुसुमान्यसूत, उभयमप्यजीजनदित्यर्थ इति मल्लिनाथः ॥ २३ ॥

आदौ शाखाग्रे काचिन्मञ्जरी सञ्जाता, पुनश्च शाखान्तर इत्यादिक्रममतिक्रम्य स्कन्धदेशादारभ्य सर्वेष्ववयवेषु युगपदेव कुसुमानि बभूवुरित्यर्थः। अपि च 'कुसुमजन्म ततो नवपल्लव०' इत्यादिषु प्रसिद्धः क्रमोऽपि तत्र नासीदित्याह—सपल्लवानीति, इति नारायणः ॥ २३ ॥

**सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे।**
**निवेशयामास मधुर्द्विरेफान् नामाक्षराणीव मनोभवस्य ॥ २४ ॥**

सद्य इति। मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षा यस्य तस्मिन्, "पत्रं वाहनपक्षयोः" इत्यमरः। नवं चूतं चूतकुसुमं तदेव बाणस्तस्मिन् नवचूतबाणे समाप्तिं नीते सति, सद्यो मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान् भ्रमरान् निवेशयामास निदधौ। अत्र प्रवालपत्रे, इत्याद्येकदेशविवर्तिरूपकं मधोरिषुकारत्वं रूपयन्नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षेति मल्लिनाथः ॥ २४ ॥

अत्र किसलयानां सन्निवेशादिसाम्यात् पत्रत्वरूपणम्। उत्तेजनवाजरचनादिभिः सम्पूर्णतां नीते हि शरे नामाक्षराणि लिख्यन्त इति लोकप्रसिद्धः क्रमः समाप्तिं नीते इत्यनेनोक्त इति नारायणः ॥ २४ ॥

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २५ ॥**

कर्णिकारं कर्णिकारकुसुमम्, "अवयवे च प्राण्योषधिवृक्षेभ्यः" (पा० ४.३.१३५) इत्युत्पन्नस्य तद्धितस्य "पुष्पफलमूलेषु बहुलम्" (पा० वा० ४.३.१६६) इति लुक्। एवमन्यत्रापि द्रष्टव्यम्। वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्यतापयत्। "लट् स्मे" (पा० ३.२.११८) इति भूतार्थे लट्। तथाहि प्रायेण विश्वसृजो विधातुः प्रवृत्तिर्गुणानां सामग्र्यविधौ साकल्यसम्पादनविषये पराङ्मुखी, सर्वत्रापि वस्तुनि किञ्चिद् वैकल्यं सम्पादयति, यथा चन्द्रे कलङ्कः। अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार इति मल्लिनाथः ॥ २५ ॥

अस्य वाक्यस्य कर्णिकारकुसुमानां निर्गन्धतया सहृदयहृदयपीडाविधाने तात्पर्यमिति

प्रतिभाति । तच्चायुक्तम्, तथा सति प्रकृष्टशृङ्गारोद्दीपनवर्णनानुगुणत्वभङ्गप्रसङ्गात् । तस्मादेवमत्र तात्पर्यं वर्णनीयम्—कर्णिकारकुसुमं तथा नामात्युज्ज्वलं यूनां हृदयहारि जातम्, यथा तस्य निर्गन्धतामवधार्य सहृदयहृदयैर्दूयत इति पूर्वार्धे वाक्यार्थः । तथा च सति सर्व-दार्थेषु विधातृदौःशील्यादेवमेव गुणसामग्र्यभाव इति नात्र काचिदनुपपत्तिरित्यर्थान्तरन्यासोऽपि सुघटो भविष्यतीति नारायणः ॥ २५ ॥

**मृगाः पियालद्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः ।**
**मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ २६ ॥**

मृगा इति । पियालद्रुमा राजादनवृक्षाः, "राजादनः पियालः स्यात्" इत्यमरः । तेषां मञ्जर्यस्तासां रजःकणैर्विघ्निताः सञ्जातविघ्ना दृष्टीनां पाताः प्रसरा येषां ते तथोक्ताः, मदोद्धता मृगाः प्रत्यनिलम् अनिलाभिमुखं मर्मरा मर्मरशब्दवन्तः पत्रमोक्षा जीर्णपर्णपाता यासु ता वनस्थलीर्विचेरुर्वनप्रदेशेषु चरन्ति स्म । "देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" इति चरतेः सकर्मकत्वमिति मल्लिनाथः ॥ २६ ॥

इत्थं वसन्तसमागमवेलायां स्थावराणां विकारं प्रतिपाद्य जङ्गमानां विकारमप्याह मृगा इत्यादिभिस्त्रिभिः श्लोकैः—मृगा इति, इति नारायणः ॥ २६ ॥

**चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।**
**मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ २७ ॥**

चूतेति । चूताङ्कुराणामास्वादेन चर्वणेन कषायकण्ठो रक्तकण्ठः । "सुरभावपटौ रक्ते कषायः" इति केशवः । पुमान् कोकिलः पुंस्कोकिलः, पुंग्रहणं प्रागल्भ्यद्योतनार्थम् । मधुरं चुकूजेति यत्तत् कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं 'मानं त्यजत' इत्याज्ञावचनं जातम् । कोकिलकूजितश्रवणानन्तरं स्मराज्ञप्ता इव मानं जहुरित्यर्थ इति मल्लिनाथः ॥ २७ ॥

**तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।**
**प्रयत्नसंस्तम्भितविक्रियाणां कथञ्चिदीशा मनसां बभूवुः ॥ २८ ॥**

तपस्विन इति । स्थाणोर्वनमोको येषां ते तपस्विनस्तत्रत्या मुनयः समानकालौ आद्यन्तावस्या आकालिकी अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीत्यर्थः । 'आकालिकडाद्यन्तवचने' ( पा ५. १. ११४ ) इति समानकालादिकट्प्रत्ययः, प्रकृतेराकाल आदेशश्च निपातितः । 'टिड्ढाणञ्' ( पा ४. १. १५ ) इत्यादिना ङीप् । केचिदकालाद् देहाध्यात्मादित्वाद् भवार्थे ठगित्याहुः । तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां मनसां कथञ्चिदीशा नियन्तारो बभूवुरिति मल्लिनाथः ॥ २८ ॥

प्रयत्नैः प्रत्याहारादिरूपैर्व्यापारैः संस्तम्भिता सम्यक् स्तम्भिता विक्रिया वासनारूपेण वर्तमाना हर्षादिर्येषां तेषां प्रयत्नसंस्तम्भितविक्रियाणाम् । हर्षादिरतीनां वासनारूपेण वर्तमानत्वमुक्तं शाकुन्तले—

"रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।

तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥" इति ।

महर्षयः कृतबहुविधप्रशस्ततपस्त्वात् परमेश्वरसान्निध्यवशाच्च प्राणायामप्रत्याहारादिभिरात्मनो मनोविकारं कथमपि निवारयामासुरित्यर्थ इति नारायणः ॥ २८ ॥

**तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने ।**
**काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥ २९ ॥**

तमिति । आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन्, रतिर्द्वितीया यस्य तस्मिन् रतिसहाये मदने तं प्रदेशं स्थाणवाश्रमं प्रपन्ने प्राप्ते सति, द्वन्द्वानि स्थावराणि जङ्गमानि च मिथुनानि, काष्ठा उत्कर्षः "काष्ठोत्कर्षेस्थितौ दिशि" इत्यमरः, तां गतो यः स्नेह इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः, स एव रसः, तेन अनुविद्धं सम्पृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः । शृङ्गारचेष्टाः प्रावर्तन्तेत्यर्थ इति मल्लिनाथः ॥ २९ ॥

इत्थं वसन्तागमनप्रभावमुक्त्वा मदनागमनप्रभावमाह--तमिति । स्त्रीपुंसौ मिथुनं द्वन्द्वम्, इत्यमरः । मदनागमनानन्तरं सर्वाणि मिथुनान्यपि स्वात्मनि सञ्जातामिच्छां तत्कालभूतैर्व्यापारैः प्रकाशयामासुरित्यर्थ इति नारायणः ॥ २९ ॥

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः ।**
**शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ ३० ॥**

ताश्चेष्टा आह मध्वित्यादिभिश्चतुर्भिः—मध्विति । द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः । उपचारात्तदर्थोऽपि द्विरेफ उच्यते । यथाह—कैयटः--"शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते, यथा भ्रमरशब्दस्य द्विरेफत्वाद् द्विरेफो भ्रमरः" । कुसुममेवैकं साधारणं पात्रं तस्मिन्; मधु मकरन्दम् 'मधु मद्ये पुष्परसे' इति विश्वः, स्वां प्रियां भृङ्गीमनुवर्तमानोऽनुरसन् पपौ, तत्पीतशेषं पपावित्यर्थः। कृष्णश्चासौ सारः शवलश्च कृष्णसारः कृष्णमृगः । "वर्णो वर्णेन" ( पा० २. १. ६९ ) इति समासः । स्पर्शेन निमीलिताक्षीं मृगीं शृङ्गेणाकण्डूयत कर्षितवान् "कण्ड्वादिभ्यो यक्" ( पा० ३. १. २७ ) इति यक्, ततः कर्तरि लङ् इति मल्लिनाथः ॥ ३० ॥

**ददौ रसात् पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।**
**अर्धोपभुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनामा ॥ ३१ ॥**

ददाविति । रसादतिरागात् करेणुः करिणी । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुः, तस्य गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखान्तर्धृतजलं गजाय ददौ । रथाङ्गनामा चक्रवाकोऽर्धं यथा तथोपभुक्तेनार्धजग्धेन बिसेन जायां सम्भावयामास, स्वजग्धशेषं ददावित्यर्थ इति मल्लिनाथः ॥ ३१ ॥

**श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसङ्ख्यानपरो बभूव ।**
**आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥ ३२ ॥**

श्रुतेति। अस्मिन् क्षणे वसन्ताविर्भावकाले भगवान् हरः श्रुताप्सरोगीतिरपि दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः, प्रसङ्ख्यानपर आत्मानुसन्धानपरः, बभूव। हि तथाहि आत्मनः चित्तस्येश्वराणां नियन्तॄणां वशिनामित्यर्थः। विहन्यन्ते एभिरिति विघ्नाः प्रत्यूहाः। घञर्थे कप्रत्ययः। जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्तीति मल्लिनाथः॥ ३२॥

एवंविधे वसन्तकोलाहले मन्मथे च स्वयमेवागते सति हरः किञ्चिदप्यस्खलितचित्तवृत्तिः परमात्मानुसन्धानान्न विररामेत्यर्थः। सकलचित्तक्षोभविधायिनोऽपि पदार्थाः कदाचिदपि न धीराणां मनसः क्षोभमापादयन्तीति भाव इति नारायणः॥ ३२॥

**लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः।**
**मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत्॥ ३३॥**

लतेति। अथ लतागृहद्वारं गतो वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेमदण्डो नन्दी नन्दिकेश्वरः। 'नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे' इति कोषः। मुखेऽर्पितायाः सरोषविस्मयस्मितावलोकं निहिताया एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनयैव। 'संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना' इत्यमरः। गणान् प्रमथान् चापलाय चापलं कर्तुं मा भवतेति, 'क्रियार्थोपपदस्य०' इत्यादिना चतुर्थी। व्यनैषीत् शिक्षितवानिति मल्लिनाथः॥ ३३॥

सर्वेऽपि काममविनयमाचरन्तु, वयन्तु भगवत्परिचारकाः, ततो नास्माकमुचितोऽयमविनय इतीममर्थं स नासारोपितया तर्जन्यैव सूचितवानित्यर्थः। वामप्रकोष्ठार्पितहेमवेत्रो वामे प्रकोष्ठे मणिबन्धकूर्परमध्येऽर्पितं न्यस्तं हेमवेत्रं सुवर्णमयं वेत्रं यष्टिर्येन स तथा। अत्र दक्षिणहस्तस्य गणविनयव्यापृतत्वात् सुवर्णवेत्रस्य वामप्रकोष्ठार्पणमित्यवसेयमिति नारायणः॥ ३३॥

**निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम्।**
**तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे॥ ३४॥**

न केवलं गणा एव विनीताः, किन्तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह—निष्कम्पेति। निष्कम्पवृक्षम्, इदमुद्भिज्जोपलक्षणम्। निभृतद्विरेफं निश्चलभृङ्गम्, स्वेदजोपलक्षणमेतत्। मूकाण्डजं निश्शब्दपक्षिसरीसृपादिकम्, एतेनाण्डजजातिरुक्ता। शान्तमृगप्रचारं जरायुजोपलक्षणमेतत्। सर्वमेव काननं तच्छासनान्नन्दीश्वराज्ञया चित्रार्पितारम्भं चित्रलिखितारम्भमिवावतस्थे। 'नृगवाद्या जरायुजाः। स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः। उद्भिदस्तरुगुल्माद्याः' इत्यमरः। इति मल्लिनाथः॥ ३४॥

अत्र जरायुजाण्डजस्वेदजोद्भिज्जभेदेन चतुर्विधेषु भूतग्रामेषूद्भिज्जादीनां तच्छासनानुष्ठानस्य विस्मयकरत्वात् प्रथमं तत्प्रकारमाह—निष्कम्पवृक्षमिति। वृक्षा अपि तदानीमचञ्चला जाता इत्यर्थः। अथ वृक्षाद्यपेक्षया किञ्चिदधिकज्ञानानां स्वेदजानां तच्छासनानुष्ठानप्रकारमाह—निभृतद्विरेफमिति। भ्रमरा अपि स्वाभाविकं भ्रमणशीलत्वं तत्यजुरित्यर्थः। स्वेदजापेक्षयाऽण्डजानां ज्ञानाधिक्यादनन्तरं तेषां नन्दिनियोगावस्थितिमाह—मूकाण्डजमिति। अथ जरायुजा अपि तन्नि-

योग एव स्थिता इत्याह शान्तमृगप्रचारमिति । भूतग्रामाणामेवमेव चतुर्विधत्वमुक्तं भोजराजेन—

"उद्भिज्जा वृक्षगुल्माद्याः पक्षिसर्पादयोऽण्डजाः ।
स्वेदजाः कृमिदंशाद्या नृगवाद्या जरायुजाः ॥" इति ।

अत्राभिप्रायवेदिनां तच्छासनावस्थानं कैमुतिकन्यायादवगतमित्युपेक्षितमित्यवसेयम् । उपमया निष्कम्पत्वाद्यतिशयः प्रतिपादित इति महेश्वरप्रभावोऽनेन श्लोकेन दर्शित इति नारायणः ॥ ३४ ॥

**दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ३५ ॥**

दृष्टीति । कामः प्रयाणे यात्रायां पुरो गतः शुक्रो यस्मिन् देशे तं पुरःशुक्रं देशमिव, 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्तते ॥'' इति प्रतिषेधात् [ इत्यर्थः ] । तस्य [ देवस्य ] दृष्टिप्रपातं दृग्विषयं परिहृत्य, प्रान्तेषु पार्श्वदेशेषु संसक्ता अन्योऽन्यसंसृष्टा नमेरूणां सुरपुन्नागानां शाखा यस्य तत्, तिरोधानयोग्यमिति भावः । भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम्, 'आस्पदं प्रतिष्ठायाम्' ( पा० ६. १. १४६ ) इति निपातः, विवेशेति मल्लिनाथः ॥ ३५ ॥

प्रयाणे हि पुरः शुक्रः प्रतिषिद्धो मुहूर्तशास्त्रे—

'आग्नेयाद्यास्तारकाः साभिजित्काः
प्रागाद्याशासंस्थिताः सप्त सप्त ।
यस्यां तिष्ठेद् भार्गवो दिश्यमुष्यां
यात्रा पुंसां प्राणमानार्थहन्त्री ॥' इति ।

यथा प्रयाणोद्युक्ता जनाः पुरोभागस्थितं शुक्रं वर्जयित्वैव गच्छन्ति, तथाऽसावपि हरस्य दृष्टिमार्गं परिहृत्यैव गतवान्, यथाऽऽत्मानं हरो न पश्येत् तथा जगामेत्यर्थः । अनेन दृष्टिमार्गपरिहारकथनेन कामस्य हरसान्निध्यप्रतिहतशक्तित्वं सूचितम् । यथा पुरःशुक्रपरिहाराभावे विनाशनिश्चयस्तथैवास्याप्येतदभिमुखप्रयाणेऽभूदिति भावः । क्षितितलपर्यन्तनिरन्तराश्लिष्टनमेरुविटपत्वात् तत्प्रदेशस्य दृष्टिमार्गपरिहारसौकर्यमिति भाव इति नारायणः ॥ ३५ ॥

**स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।**
**आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥ ३६ ॥**

स इति । आसन्नशरीरपात आसन्नमृत्युः स कामः, शार्दूलचर्मणा व्यवधानवत्यां व्याघ्रचर्मास्तृतायामित्यर्थः, 'मोक्षश्रीर्व्याघ्रचर्मणि' इति प्राशस्त्यादिति भावः । देवदारुद्रुमवेदिकायामासीनमुपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श । त्र्यम्बकमित्युक्ते पादपूरणाव्यत्यासात् 'त्रियम्बकम्' इति पादपूरणार्थोऽयमियङादेशश्छान्दसः, महाकविप्रयोगादभियुक्तैरङ्गीकृतः । केचित्साहसिकाः 'त्रिलोचनम्' इति पेठुरिति मल्लिनाथः ॥ ३६ ॥

'लोचनमम्बकम्' इति त्रिकाण्डशेषः । 'त्रियम्बकम्' इत्यत्र यणादेशे प्राप्ते छन्दोभङ्ग-

प्रसङ्गे सति छन्दोविचितिकारैरियङुवङादेशयोर्विहितत्वादियङादेशः, 'त्रियम्बकं नान्यमुपस्थितासौ' इति भर्तृहरिप्रयोगाच्च नायं दोषः । अत्र त्र्यम्बकशब्दप्रयोगेण 'तृतीयादक्ष्णः कृशानुः किल निष्पपात' इति वक्ष्यमाणोऽर्थः सूचितः । देवदारुरेव द्रुमो देवदारुद्रुमः तस्य वेदिकायां शिलादिभिर्बद्धे मूलप्रदेश इत्यर्थः । अनवसरोपस्थानादस्य शरीरनाश इति भावः । अवसरोपस्थानेनानुग्रहः पुनः'तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम्' इत्यादिना वक्ष्यत इति नारायणः ॥ ३६ ॥

**पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं सन्नमितोभयांसम् ।**
**उत्तानपाणिद्वयसन्निवेशात् प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ३७ ॥**

तमेवं देवं षड्भिः श्लोकैर्वर्णयति—पर्यङ्केति । पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्द्धमृजुरायतश्च ऋज्वायतस्तम्, सन्नमितावुभावंसौ यस्य तं तथोक्तम् । वृत्तिविषये उभशब्दस्थान उभयशब्दप्रयोग इत्युक्तं कैयटेन । उत्तान ऊर्ध्वतलो यः पाणिद्वयस्य सन्निवेशः संस्थानं तस्मात्, अङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम् । वीरासने वशिष्ठः—

"एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितम् ।
इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥" इति ॥

तथा योगसारे—

'उत्तानिते करतले करमुत्तानितं परम् ।
आदायाङ्कगतं कृत्वा ध्यायेद् यस्तस्य सोऽन्तरम् ॥' इति मल्लिनाथः ॥ ३७ ॥

पर्यङ्कबन्धस्थिरपूर्वकायं पर्यङ्कस्य वीरासनस्य बन्धेन बन्धनेन स्थिरो निश्चलः पूर्वकायोऽधः कायः कायस्याधोभागो यस्य । वीरासनबन्धनेन निश्चलशरीरपूर्वार्धमित्यर्थ इति नारायणः ॥ ३७ ॥

**भुजङ्गमोन्नद्धजटाकलापं कर्णावसक्तद्विगुणाक्षसूत्रम् ।**
**कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ३८ ॥**

भुजङ्गमेति । भुजङ्गमेन उन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तम् । कर्णावसक्तं कर्णावलम्बीत्यर्थः, अत एव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमाला यस्य तम्, कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानमिति मल्लिनाथः ॥ ३८ ॥

योगमात्रव्यापृतस्य जपविरामादक्षमालार्पणप्रकारमाह—कर्णावसक्तेत्यादि । अक्षसूत्रस्य कर्णे निधानं कर्णस्य पवित्रतास्मृतेः । मृगत्वचः स्वतो नीलत्वाद् विशेषनीलोक्तिरिति नारायणः ॥ ३८ ॥

**किञ्चित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।**
**नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ३९ ॥**

किञ्चिदिति । किञ्चित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका

येषां तैः, 'तारकाऽक्ष्णः कनीनिका' इत्यमरः, भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैः, अविस्पन्दितपक्ष्ममालैरचलितपक्ष्मपङ्क्तिभिरधःप्रसृता मयूखा येषां तैरधोमयूखैर्नेत्रैः। त्रिनेत्रत्वाद् बहुवचनम्। लक्ष्यीकृतघ्राणं नासाग्रनिर्विष्टदृष्टिमित्यर्थः। 'करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः। आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः'। इति योगसारे, इति मल्लिनाथः ॥ ३९ ॥

**अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरङ्गम्।**
**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥ ४० ॥**

अवृष्टीति। अन्तश्चरन्तीति अन्तश्चराः, तेषां मरुतां प्राणादीनां निरोधाद् हेतोरवृष्टिसंरम्भमविद्यमानवर्षसम्भ्रममम्बुवाहमिव स्थितम्, एतेन प्राणवायुनिरोधः सूचितः। अनुत्तरङ्गमनुद्भूततरङ्गमपामाधारं ह्रदमिव स्थितम्, एतेनापाननिरोधः सूचितः। तथा निवाते निर्वातदेशे निश्चलं प्रदीपमिव स्थितम्। एतेन शेषवायुनिरोधः सूचितः। 'निवातावाश्रयावातौ' इत्यमर इति मल्लिनाथः ॥ ४० ॥

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः।**
**मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥ ४१ ॥**

कपालेति। कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः, शिरस्तो ब्रह्मरन्ध्रात्, पञ्चम्यास्तसिल्। उदितैरुद्भूतैर्ज्योतिःप्ररोहैस्तेजोऽङ्कुरैर्मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तमिति मल्लिनाथः ॥ ४१ ॥

बालस्येन्दोर्जटाकोटितटघटितस्य बालचन्द्रस्य रश्मीन् ग्लपयन्तम्। अयमभिप्रायः—योगिनो हि नियमितप्राणा आग्नेयमण्डलापरनामधेयं कुण्डलिनीशब्दाभिधेयमात्मतेजो मूलाधारादुत्थाप्य क्रमात्सुषुम्णान्तरं नाभिप्रदेशं हृदयं भ्रूमध्यं च नीत्वा द्वादशान्तस्थिते परमात्मनि योजयन्ति। परमेश्वरस्य तु तदानीं तेन तेजसा तन्मध्यवर्तिनो बालचन्द्रस्य प्रभासङ्कोचोऽपि सञ्जातः। प्रबलसन्निधौ दुर्बलं ग्लानिमेतीति हि प्रसिद्धमिति भाव इति नारायणः ॥ ४१ ॥

**मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम्।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ४२ ॥**

मन इति। नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः सञ्चारो यस्य तत्तथोक्तम्। समाधिना प्रणिधानेन वश्यं वशं गतम्, यत्प्रत्ययः। 'प्रणिधानं समाधानं समाधिश्च समाश्रयः' इति हलायुधः। मनो हृदि हृदयाख्येऽधिष्ठाने व्यवस्थाप्य। तथा च वशिष्ठः—

यतो निर्याति विषयान् यस्मिंश्चैव प्रलीयते। हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥ इति।

क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः, यम्, न क्षरतीत्यक्षरमविनाशिनं विदुर्विदन्ति 'विदो लटो वा' ( पा० ३. ४. ८३ ) इति झेर्जुस्। तमात्मानमात्मनि स्वस्मिन्नवलोकयन्तं साक्षात् कुर्वन्तम्, स्वातिरेकेण परमात्मनोऽभावादिति भाव इति मल्लिनाथः ॥ ४२ ॥

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाऽप्यधृष्यम्।**
**नालक्षयत् साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥ ४३ ॥**

स्मर इति । स्मरः कामस्तथाभूतं पूर्वोक्तरूपं मनसाऽप्यधृष्यमयुग्मनेत्रं विषमाक्षमदूरात पश्यन्, साध्वसेन सन्नहस्तो विश्लथपाणिः सन्, स्वहस्तात् स्रस्तं शरं चापमपि चापञ्च नालक्षयत् न विवेद । भीतो मुह्यतीति भाव इति मल्लिनाथः ॥ ४३ ॥

अत्र स्वहस्तस्रस्तस्याप्यज्ञातत्ववचनेन साध्वसस्योत्कर्ष उक्तः । तथाभूतत्वमेवोपपादयति मनसाऽप्यधृष्यमिति । सङ्कल्पेनाप्यनभिभवनीयम् । अहमेनमभिभविष्यामीति सङ्कल्पयितुमप्यशक्यमित्यर्थ इति नारायणः ॥ ४३ ॥

**निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन ।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ४४ ॥**

निर्वाणेति । अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठं नष्टप्रायमित्यर्थः, अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन सौन्दर्येण सन्धुक्षयन्तीव पुनरुज्जीवयन्तीव स्थिता, वनदेवताभ्यां सखीभूताभ्यामनुप्रयाताऽनुगता स्थावरराज्यकन्या पार्वती अदृश्यत दृष्टेति मल्लिनाथः ॥ ४४ ॥

निर्वाणभूयिष्ठम् । आहिताग्न्यादिषु पाठात् पूर्वनिपातनियमाभावः । कर्तरि निष्ठान्तश्चायं निर्वाणशब्दः 'निर्वाणोऽवाते' ( पा० ८. २. ५० ) इति निपातितः । 'वीर्यं बले प्रभावे च' इत्यमरः । अत्र निर्वाणसन्धुक्षणशब्दाभ्यां मन्मथवीर्यस्याग्निसाम्यं प्रतीयते । तेन चात्यन्तदुस्सहत्वम् । तत्रत्यानां योषितां वनदेवतात्वाद् वनदेवताभ्यामित्युक्तम् । वक्ष्यति च 'योषितो वनदेवताः' इति । एते च विजया मालिनीति चेति प्रसिद्धे देवीसख्यौ इति नारायणः ॥ ४४ ॥

**अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।**
**मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ४५ ॥**

तामेवाऽऽह चतुर्भिः—अशोकेति । अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा यस्मिंस्तत्तथोक्तम् । आकृष्टहेमद्युतीनि आहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथोक्तम्, मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत् । 'सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः । वसन्तपुष्पाण्येवाभरणं वहन्तीति मल्लिनाथः ॥ ४५ ॥

वसन्तपुष्पाभरणं वहन्ती । वसन्तपुष्पाभरणमिति जातावेकवचनम् । वसन्तपुष्पमयान्याभरणानि दधानेत्यर्थः । वसन्तपुष्पाभरणानामितराभरणव्यतिरेकं प्रतिपादयितुं विशिनष्टि—अशोकेत्यादिना । तत्रादावशोककुसुमानामौज्ज्वल्यातिरेकात् तद्दर्शनं जातमिति पूर्वमशोकपुष्पाभरणं वर्णयति—अशोकनिर्भर्त्सितपद्मरागमिति । अनेन देव्याः काञ्चीनूपुरादिप्रत्युप्तानामुत्तमतराणां पद्मरागाणामशोककुसुमेभ्यो न्यूनताप्रतीतिः प्रतिपादिता । मुक्ताकलापो हारः, मुक्ताकलापीकृतानि मुक्ताकलापतां प्रापितानि सिन्धुवारकुसुमानि यस्मिन् । अत्राभूततद्भावप्रयोगेण सिन्धुवारपुष्पाणां मुक्ताकलापापेक्षया बहुगुणत्वान्मुक्ताकलापमपहाय तत्स्थानप्रापणमुक्तमिति व्यतिरेकोपपत्तिरिति नारायणः ॥ ४५ ॥

**पर्याप्तपुष्पस्तबकावनम्रा सञ्चारिणी पल्लविनी लतेव ॥ ४६ ॥**

पर्याप्तपुष्पस्तबकावनम्रा पल्लविनी किसलयवती सञ्चारिणी लतेव स्थितेति शेष इति मल्लिनाथः ॥ ४६ ॥

अत्र स्तबकशब्देनैव विवक्षितार्थसिद्धावपि मनोहारित्वातिशयप्रदर्शनार्थं पुष्पशब्दप्रयोगः। यदुक्तं काव्यप्रकाशकृता—'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः। सन्निधानादिबोधार्थम्,' (समु० ७ का. ५८) इति। अत्र गौरीलतयोः स्तनस्तबकयो रक्तवासः पल्लवयोश्च परस्परसाम्यमुत्प्रेक्षाबीजमिति नारायणः ॥ ४६ ॥

**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम्।**
**प्रतिक्षणं सम्भ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥ ४७ ॥**

सुगन्धीति। सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णम्। बिम्बतुल्योऽधरो बिम्बाधरः। 'बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम्' (५. २. १५) इति वामनः। तस्य आसन्नचरं सन्निकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं सम्भ्रमेण लोलदृष्टिश्चञ्चलाक्षी सती लीलारविन्देन निवारयन्तीति मल्लिनाथः ॥ ४७ ॥

**तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम्।**
**जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥ ४८ ॥**

तामिति। सर्वावयवेषु अनवद्यामगर्ह्याम्। 'अवद्यपण्य०' (पा० ३. १. १०१) इति निपातः। रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तमादधानां न्यूनतामावहन्तीमित्यर्थः, तां पार्वतीं वीक्ष्य पुष्पचापः कामो जितेन्द्रिये दुर्जयेऽपीत्यर्थः, शूलिनि शिवे विषये स्वकार्यसिद्धिं पुनराशशंसे चकमे। पूर्वं 'साध्वससन्नहस्तः' इत्यादिना कार्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तमिति मल्लिनाथः ॥ ४८ ॥

रतेः कामदेवेन सह तत्रागतायाः कामपत्न्याः। अपिशब्देनान्यासां का गतिरिति द्योत्यते। रतिरपि तामवलोक्य किमपि व्रीडाकुला नूनं जातैवेत्यर्थः। तस्या रूपाभिमानदर्पं हरन्तीमिति भावः। शूलिनस्तीक्ष्णदण्डत्वेऽपि पुष्पकेतुः सुकुमारसाधनस्याऽऽत्मनस्तज्जयो नूनमनया भविष्यतीति कल्पितवानिति भाव इति नारायणः ॥ ४८ ॥

**भविष्यतः पत्युरुमा च शम्भोः समाससाद प्रतिहारभूमिम्।**
**योगात् स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥ ४९ ॥**

भविष्यत इति। उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिं द्वारदेशं समाससाद, 'स्त्री द्वार्द्वारं प्रतिहारः' इत्यमरः। स शम्भुश्चान्तः परमात्मेति संज्ञा यस्य तत् परं मुख्यम्, 'परं दूरान्यमुख्येषु' इति यादवः; ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगाद् ध्यानात्। 'योगः सन्नहनोपायः ध्यानसङ्गतियुक्तिषु' इत्यमरः। उपाररामोपारतः 'व्याङ्परिभ्यो रमः' (पा० १. ३. ८३) इति परस्मैपदमिति मल्लिनाथः ॥ ४९ ॥

अत्र चशब्दद्वयेन दैवादागतं यौगपद्यं द्योत्यत इति नारायणः ॥ ४९ ॥

**ततो भुजङ्गाधिपतेः फणाग्रैरधः कथञ्चिद्धृतभूमिभागः।**
**शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निविडं बिभेद ॥ ५० ॥**

तत इति। ततो भुजङ्गाधिपतेः शेषस्य फणाग्रैरधो भूमेरधः कथञ्चिदतियत्नेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स तथोक्तः, वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः। शनैः कृता प्राणानां प्राग्निरुद्धानां विमुक्तिः पुनः सञ्चारो येन स कृतप्राणविमुक्तिः,

ईशो निविडं दृढं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकारेति मल्लिनाथः ॥ ५० ॥

फणाग्रैरिति बहुवचनेन सर्वासामपि स्वशक्तीनां तत्रैवोपयोगविधानमुक्तम्, भगवति योगादुपरते तद्भारमसहमानेनानन्तेन सर्वा अपि फणास्तदधोभाग एवाऽऽधाय भूमिर्धृताऽभूदिति भावः । कुम्भेन क्रमेण पूरितानां प्राणवायूनां योगशास्त्रोक्तरेचनक्रमेण विमुक्तिमाह—शनैरित्यादीति नारायणः ॥ ५० ॥

**तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ५१ ॥**

तस्मा इति । अथ नन्दी तस्मै भगवते, क्रियाग्रहणाच्चतुर्थी । प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेनोपेतां सेवार्थमागतामित्यर्थः । शैलसुतां शशंस निवेदयामास । भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशामङ्गीकृतप्रवेशाम्, एनां शैलसुतां प्रवेशयामास चेति मल्लिनाथः ॥ ५१ ॥

एककर्तृकयोः शंसनप्रवेशनक्रिययोः समुच्चयेऽत्र चशब्द इति नारायणः ॥ ५१ ॥

**तस्याः सखीभ्यां प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य ।**
**व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ५२ ॥**

तस्या इति । तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लून उपचितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य सम्बन्धी पुष्पोच्चयः पुष्पप्रकरः । 'हस्तादाने चेरस्तेये' ( पा० ३. ३. ४० ) इति घञ्विषयत्वात् कवीनामयं प्रामादिकः प्रयोग इति वल्लभः । त्र्यम्बकपादमूले प्रणिपातपूर्वं नमस्कारपूर्वकं व्यकीर्यत विक्षिप्त इति मल्लिनाथः ॥ ५२ ॥

भग्नाः पल्लवाः पल्लवभङ्गाः, पल्लवभङ्गैर्भिन्नो मिश्रः पल्लवभङ्गभिन्नः । स्वयमेवाहृतैः पल्लवैरुपेत इत्यर्थ इति नारायणः ॥ ५२ ॥

**उमाऽपि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।**
**चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ५३ ॥**

उमाऽपीति । उमाऽपि नीलालकानां मध्ये शोभत इति तथोक्तम्, अलकन्यस्तमित्यर्थः । नवकर्णिकारं विस्रंसयन्ती, कर्णात् च्युतः पल्लवो यस्य तेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार । क्रियाग्रहणात् सम्प्रदानत्वमिति मल्लिनाथः ॥ ५३ ॥

अथ देव्याः प्रणाममाह—उमाऽपीति । अपिशब्दः पूर्वोक्तसखीप्रणामसमुच्चयार्थः । 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । अत्र नीलशब्दनवशब्दाभ्यामलककर्णिकारकुसुमयोः परभागलाभातिशयः सूचित इति नारायणः ॥ ५३ ॥

**अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन ।**
**न हीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम् ॥ ५४ ॥**

अनन्येति । सा कृतप्रणामा देवी भवेन हरेण, अन्यां न भजतीति तमनन्यभाजम् 'भजो ण्विः' ( पा० ३. २. ६२ ) इति ण्विप्रत्ययः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । पतिमाप्नुहीति तथ्यं सत्यमेवाभिहितोक्ता उत्तरत्र तथैव सम्भवादिति भावः । अभिदधातेर्ब्रुवर्थस्य दुहादित्वाद-

प्रधाने कर्मणि क्तः । तथाहि ईश्वरव्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने, 'लोकस्तु भुवने जने' इत्यमरः; विपरीतं विसंवादिनमर्थमभिधेयं न पुष्णन्ति न बोधयन्तीत्यर्थ इति मल्लिनाथः ॥ ५४ ॥

देव्या प्रणतस्य देवस्याऽऽशीर्वादप्रकारमाह—

अनन्येति । सपत्नीसद्भावो हि स्त्रीणां परं दुःखकारणमिति भावः । ईश्वराणां वचनं देशान्तरे कालान्तरेऽवस्थान्तरे वा न व्यभिचरतीत्यर्थः । तत्प्रतिबन्धकं दुरितं निरस्यापि साध्यं साधयत्येवेति पुष्णन्तीत्यनेन द्योत्यते । हिशब्दः प्रसिद्धौ । प्रसिद्धिश्च श्रुतिस्मृतिषु । 'पाक' इति पाठे परिमाण इत्यर्थ इति नारायणः ॥ ५४ ॥

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद् वह्निमुखं विविक्षुः ।**
**उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ५५ ॥**

कामस्त्विति । कामस्तु बाणावसरं प्रतीक्ष्योमासन्निधानादयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवत्, शलभवत् 'समौ पतङ्गशलभौ' इत्यमर; 'तेन तुल्यं क्रिया चेद् वतिः' ( पा० ५. १. ११५ ) इति वतिप्रत्ययः । वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः, विशतेः सन्नन्तादुप्रत्ययः । उमायाः समक्षमुमासमक्षम् । अक्ष्णोः समीपम् 'अव्ययीभावे शरत्प्रभृतिभ्यः' (पा० ५. ४. १०७) इति समासान्तष्टच्प्रत्ययः । हरे बद्धलक्ष्यः सन् शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवानिति मल्लिनाथः ॥ ५५ ॥

**अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।**
**विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥ ५६ ॥** X o. p. r.

अथेति । अथ गौरी तपोऽस्यास्तीति तपस्वी, 'अस्मायामेधास्रजो विनिः' (पा० ५. २. १२१) इति विनिप्रत्ययः; तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतोंऽशुमतो मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकामुपनिन्ये समर्पितवतीति मल्लिनाथः ॥ ५६ ॥

दैवात् परिचयस्य कारणान्तरमपि तदैव जातमित्याह—अथेति । तपस्विन इत्यनेन तादृशोपायनविशेषौचित्यं द्योत्यते । मन्दाकिनीशब्देन पद्माक्षाणां सुलभत्वमुक्तम्, मन्दाकिन्या हिमवच्छिखरवर्तित्वात् । मन्दाकिनीसम्बन्धेन पद्माक्षाणां पावनत्वाधिक्यं च द्योत्यते । पद्माक्षस्य धारणमात्रमेवातः परं कर्तव्यम् । संस्कारस्तु सर्वोऽपि कृत एवेत्याह—भानुमत इत्यादि । भगवदुपायनार्थं स्वयमेवाऽऽदाय शोषितामित्यर्थ इति नारायणः ॥ ५६ ॥

**प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।**
**सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥ ५७ ॥**

प्रतिग्रहीतुमिति । त्रिलोचनश्च प्रणयिप्रियत्वादर्थिप्रियत्वात् तामक्षमालां प्रतिग्रहीतुं स्वीकर्तुमुपचक्रमे । पुष्पं धनुर्यस्य स पुष्पधन्वा कामश्च । 'वा संज्ञायाम्' ( पा० ५. ४. १३३ ) इत्यनङादेशः । सम्मोह्यतेऽनेनेति सम्मोहनं नाम । नामेति प्रसिद्धौ । अमोघं बाणं सायकं धनुषि समधत्त संहितवानिति मल्लिनाथः ॥ ५७ ॥

प्रणयिनः प्रार्थयितारः, 'प्रणयः स्नेहयाच्ञयोः' इति भोजः, । ते प्रिया यस्य तस्य भावस्तत्त्वं तस्माद्धेतोः, दाक्षिण्यादित्यर्थः । सम्मोहन इति प्रसिद्धः ।

'द्रावणः क्षोभणश्चैव वशीकरण इत्यपि । आकर्षणश्च कामस्य बाणः सम्मोहनोऽपरः ॥'

इत्युक्तत्वात् । अत्र चकारद्वयेन यौगपद्यमुक्तम् । तेन च कामस्य क्षिप्रकारित्वं ध्वन्यत इति नारायणः ॥ ५७ ॥

**अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद् बलवन्निगृह्य ।**
**हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ५८ ॥**

अथेति । अथायुग्मानि नेत्राणि यस्य सोऽयुग्मनेत्रस्त्रिनेत्रः, वशित्वाज्जितेन्द्रियत्वाद् इन्द्रियक्षोभं पूर्वोक्तमिन्द्रियविकारं पुनर्बलवद् दृढं निगृह्य निवार्य स्वचेतोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुर्दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामासेति मल्लिनाथः ॥ ५८ ॥

द्वयादयो युग्मसङ्ख्या युग्मशब्देनोच्यन्ते । युग्मसङ्ख्याकनेत्रो न भवतीत्ययुग्मनेत्रः । प्रमादादुत्पथगामिनामिन्द्रियाणां निग्रहे वशिनामेव हि सामर्थ्यमित्यर्थः । पुनःशब्देन प्रत्याहरणमुक्तम् । पुनरपीत्यर्थ इति नारायणः ॥ ५८ ॥

**स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ५९ ॥**

स इति । स भगवान् , दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं नतांसमाकुञ्चितः सव्यपादो यस्य तमालीढाख्यस्थानके स्थितमित्यर्थः; चक्रीकृतचारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श । आलीढलक्षणमाह यादवः— P. P. P. P.P.P...

'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृती ॥
अन्वर्थं स्यात् समपदमालीढं तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्यये' ॥ इति ॥

इति मल्लिनाथः ॥ ५९ ॥ omkar prasad langoo

**तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।**
**स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥ ६० ॥**

तप इति । तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन् उद्दीप्यमान उदर्चिरुद्भूतज्वालः कृशानुरग्निः सहसाऽतर्कितमेव, 'अतर्किते तु सहसा' इत्यमरः, निष्पपात किल निश्चक्राम खलु इति मल्लिनाथः ॥ ६० ॥

भगवतस्तत्तादृशमदनदर्शनजं क्रोधं तत्फलञ्चाऽऽह—तप इति । कृशानुरिति, यः किल कल्पान्ते सकलमपि लोकं भस्मसात्करिष्यति । यदाह मुरारिः—

'नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः ।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत् ' ॥

( अनर्घ० अङ्क ७ श्लो० ३१ ) इति । किलेतिह्ये । कृशानुनिष्पतनस्यावस्थां दर्श-

यति—स्फुरन्निति । आदौ तावत्तृतीयलोचने किञ्चित्प्रकाशमानो दृष्ट इत्यर्थः । द्वितीयावस्थां दर्शयति—उदर्चिरिति । तदनन्तरं जाज्वल्यमानो दृष्ट इत्यर्थः । अत्र स्फुरन् उदर्चिः निष्पपातेति पदत्रयेण कृशानुस्वभावसिद्धः क्रमो विवक्षित इत्यवसेयमिति नारायणः ॥ ६० ॥

**क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।**
**तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ६१ ॥**

क्रोधमिति । हे प्रभो स्वामिन् , क्रोधं संहर संहर निवर्तय निवर्तय । 'चापले द्वे भवत इति वक्तव्यम्' ( पा० वा० ८. १. १२ ) इति द्वित्वम् । 'सम्भ्रमेण वृत्तिश्चापलम्' इति काशिका । इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि यावत् चरन्ति प्रवर्तन्ते, तावत् तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' ( काव्यालं० सू० वृ० ५. १. १९ ) इति वामनः । स वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार, ददाहेत्यर्थः, इति मल्लिनाथः ॥ ६१ ॥

कृशानुनिष्पतनस्य फलमाह—क्रोधमिति । संहरेति प्रार्थनायां लोट् । द्विर्वचनं तु सम्भ्रमं प्रतिपादयति । इतिशब्दः प्रकारवाची । चरन्तीत्यत्र लट्प्रयोगस्यायं निर्वाहः—'तदादौ च' इति भोजसूत्रम् , तस्य चायं वृत्तिग्रन्थः—तदादौ चोपपदे भूतार्थे लड् भवतीति । वृत्तौ चायमेव श्लोक उदाहरणत्वेन दर्शितः; 'अथाऽऽह वर्णी' ( स० ५, श्लो० ६५ ) इति च । माधवस्त्वेवमाह—यावत्तावच्छब्दौ क्रिययोस्तुल्यकालतामाहतुः । गिरां चरणे वर्तमाने सति वह्निः काममदहदित्यर्थः । नहि मरुतां वचनेषु चरत्सु वह्निः काममदहदिति प्रयोगे कोऽपि दोष इति। वाक्यप्रचारसमकालमेव मदनो दग्धोऽभूदित्यर्थः । अत्र भवनेत्रजन्मेत्यनेन दहनसामर्थ्यं द्योत्यते । देवानां परमेश्वरप्रतिकूलः समुद्यमोऽपि भग्नोऽभूदिति अनेनैव श्लोकेन दर्शितः । पुनश्च भग्नमदैर्देवैः सेनानीप्रसूत्यै भगवानभ्यर्थितोऽभूदित्यवसेयम् । अत एव षष्ठे सर्गे हर एव वक्ष्यति—

'सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रतियाचितः ॥' इति नारायणः ॥६१॥

**तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ६२ ॥**

तीव्रेति । तीव्राभिषङ्गप्रभवेणातिदुःसहाभिभवसम्भवेन । 'अभिषङ्गस्त्वभिभवे सङ्गे आक्रोशनेऽपि च' इति वैजयन्ती । इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्छायाः कर्त्रा, रतिर्मदनभार्या मुहूर्तं न ज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव, सहसा दुःखोपनिपातान्मुमूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिरिति मल्लिनाथः ॥ ६२ ॥

अथ परमेश्वरागतस्य तादृशस्य रौद्ररसस्य 'रौद्रात्तु करुणो रसः' इति न्यायेन कार्यभूतमुत्तरसर्गे वर्णयिष्यमाणं करुणमुपक्षिपति—तीव्रेति । मोहेन करुणव्यभिचारिणा प्रलयाख्येन सात्त्विकेन भावेन कर्त्रा—

"स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता।
प्रलयो नष्टसंज्ञत्वं शेषाः स्युर्व्यक्तलक्षणाः।' ( प्रकाश ४ श्लो० ५-६ )

इति दशरूपके। 'अभिषङ्गस्तु कथ्यते। आक्रोशशापाभिभवसङ्गेष्वाह तु सज्जनः । दुःखे पराभवे त्वाह सिंहः' इति केशवः, इति नारायणः ॥ ६२ ॥

**तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य।**
**स्त्रीसन्निकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः॥ ६३ ॥**

तमिति। तपस्वी तपोनिष्ठो भूतपतिः शिवस्तपसो विघ्नमन्तरायभूतं तं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसन्निकर्षं स्त्रीसन्निधानं परिहर्तुमिच्छन्, तस्यानर्थहेतुत्वादिति भावः। सभूतः सगणः सन् अन्तर्दधे, इति मल्लिनाथः ॥ ६३ ॥

अथ मदने दग्धे दाह्याभावात्प्रशान्तरोषस्य देवस्य पुनरपि शान्ते विश्रान्तिमाह—

तमिति। आशु इति शान्तरसस्यादूरविच्छेदः प्रकाश्यते। तत्र हेतुः—तपस्वीति। नित्ययोगे मतुप्। पुराणप्रसिद्धश्चायमर्थः 'शिवो योगरतः शश्वद्' इत्यादि। वज्रोऽशनिः, उपमानेन तत्स्वभावत्वं द्योत्यते। स्त्रीसन्निकर्षं परिहर्तुम् 'अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्' इति न्यायेन देवीसन्निकर्षेण ममावश्यं चित्तविकारो भविष्यति देव्या वैलक्ष्यविषादादिदर्शनेन कामपत्न्याः शोकानुसन्धानदर्शनेन च तपसो महान् विघ्नो भविष्यतीत्याशङ्क्येत्यर्थः, अन्तर्दधेऽन्तर्धानेन तद्देशवासमजहात्। अत्र भूतशब्दः सर्वपरिच्छदानामुपलक्षणम्, सर्वस्यापि स्वेच्छापरिकल्पितत्वादिति नारायणः ॥ ६३ ॥

**शैलात्मजाऽपि पितुरुच्छिरसोऽभिलाषं व्यर्थं समर्थ्य ललितं वपुरात्मनश्च।**
**सख्योः समक्षमिति चाधिकजातलज्जा शून्या जगाम भवनाभिमुखी कथञ्चित्॥६४॥**

शैलात्मजेति। शैलात्मजा पार्वत्यपि उच्छिरस उन्नतशिरसो महतः पितुरभिलाषं 'हरो वरोऽस्तु' इति मनोरथम्, ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा, समानजनसमक्षमवमानस्यातिदुस्सहत्वादिति भावः। शून्या निरुत्साहा सती कथञ्चित् कृच्छ्रेण भवनस्याभिमुखी जगामेति मल्लिनाथः ॥ ६४ ॥

न केवलं देवस्तद्देशवासमजहदपि तु शैलात्मजापीत्यपिशब्दार्थः ॥ समक्षम् अक्ष्णोः समीपे। 'अव्ययं विभक्ति०' ( पा० २. १. ६. ) इत्यादिना समासः 'तृतीयासप्तम्योर्बहुलम्' ( पा० २. ४. ८४ ) इत्यम्भावः। इतिशब्दः सखीसाक्षात्कारस्य लज्जाधिक्ये हेतुत्वं द्योतयति। सौभाग्यभङ्गस्यान्यदर्शनमेवात्यन्तलज्जावहम्, किं पुनः सखीदर्शनमिति भावः। इत्थमभिप्रवृद्धस्य मनोरथस्यात्यन्तभङ्गे जाते सति सञ्जातायाश्चिन्ताया अनुभावमाह—शून्येति। आत्मानमप्यजानानेति भाव इति नारायणः ॥६४ ॥

**सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।**
**सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां प्रतिपथगतिरासीद् वेगदीर्घीकृताङ्गः ॥६५॥**

यति—स्फुरन्निति। आदौ तावत्तृतीयलोचने किञ्चित्प्रकाशमानो दृष्ट इत्यर्थः। द्वितीयावस्थां दर्शयति—उदर्चिरिति। तदनन्तरं जाज्वल्यमानो दृष्ट इत्यर्थः। अत्र स्फुरन् उदर्चिः निष्पपातेति पदत्रयेण कृशानुस्वभावसिद्धः क्रमो विवक्षित इत्यवसेयमिति नारायणः ॥ ६० ॥

**क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।**
**तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ६१ ॥**

क्रोधमिति। हे प्रभो स्वामिन्, क्रोधं संहर संहर निवर्तय निवर्तय। 'चापले द्वे भवत इति वक्तव्यम्' ( पा० वा० ८. १. १२ ) इति द्वित्वम्। 'सम्भ्रमेण वृत्तिश्चापलम्' इति काशिका। इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि यावत् चरन्ति प्रवर्तन्ते, तावत् तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा। 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' ( काव्यालं० सू० वृ० ५. १. १९ ) इति वामनः। स वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार, ददाहेत्यर्थः, इति मल्लिनाथः ॥ ६१ ॥

कृशानुनिष्पतनस्य फलमाह—क्रोधमिति। संहरेति प्रार्थनायां लोट्। द्विर्वचनं तु सम्भ्रमं प्रतिपादयति। इतिशब्दः प्रकारवाची। चरन्तीत्यत्र लट्प्रयोगस्यायं निर्वाहः—'तदादौ च' इति भोजसूत्रम्, तस्य चायं वृत्तिग्रन्थः—तदादौ चोपपदे भूतार्थे लड् भवतीति। वृत्तौ चायमेव श्लोक उदाहरणत्वेन दर्शितः; 'अथाऽऽह वर्णी' ( स० ५, श्लो० ६५ ) इति च। माधवस्त्वेवमाह—यावत्तावच्छब्दौ क्रिययोस्तुल्यकालतामाहतुः। गिरां चरणे वर्तमाने सति वह्निः काममदहदित्यर्थः। नहि मरुतां वचनेषु चरत्सु वह्निः काममदहदिति प्रयोगे कोऽपि दोष इति। वाक्यप्रचारसमकालमेव मदनो दग्धोऽभूदित्यर्थः। अत्र भवनेत्रजन्मेत्यनेन दहनसामर्थ्यं द्योत्यते। देवानां परमेश्वरप्रतिकूलः समुद्यमोऽपि भग्नोऽभूदिति अनेनैव श्लोकेन दर्शितः। पुनश्च भग्नमदैर्देवैः सेनानीप्रसूत्यै भगवानभ्यर्थितोऽभूदित्यवसेयम्। अत एव षष्ठे सर्गे हर एव वक्ष्यति—

'सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रतियाचितः ॥' इति नारायणः ॥६१॥

**तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ६२ ॥**

तीव्रेति। तीव्राभिषङ्गप्रभवेणातिदुःसहाभिभवसम्भवेन। 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती। इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्छायाः कर्त्रा, रतिर्मदनभार्या मुहूर्तं न ज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव, सहसा दुःखोपनिपातान्मुमूर्छेत्यर्थः। मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिरिति मल्लिनाथः ॥ ६२ ॥

अथ परमेश्वरागतस्य तादृशस्य रौद्ररसस्य 'रौद्रात्तु करुणो रसः' इति न्यायेन कार्यभूतमुत्तरसर्गे वर्णयिष्यमाणं करुणमुपक्षिपति-तीव्रेति। मोहेन करुणव्यभिचारिणा प्रलयाख्येन सात्त्विकेन भावेन कर्त्रा—

"स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता । प्रलयो नष्टसंज्ञत्वं शेषाः स्युर्व्यक्तलक्षणाः ।' ( प्रकाश ४ श्लो० ५-६ )

इति दशरूपके । 'अभिषङ्गस्तु कथ्यते । आक्रोशशापाभिभवसङ्गेष्वाह तु सज्जनः । दुःखे पराभवे त्वाह सिंहः' इति केशवः, इति नारायणः ॥ ६२ ॥

**तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।**
**स्त्रीसन्निकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ६३ ॥**

तमिति । तपस्वी तपोनिष्ठो भूतपतिः शिवस्तपसो विघ्नमन्तरायभूतं तं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसन्निकर्षं स्त्रीसन्निधानं परिहर्तुमिच्छन्, तस्यानर्थहेतुत्वादिति भावः । सभूतः सगणः सन् अन्तर्दधे, इति मल्लिनाथः ॥ ६३ ॥

अथ मदने दग्धे दाह्याभावात्प्रशान्तरोषस्य देवस्य पुनरपि शान्ते विश्रान्तिमाह—

तमिति । आशु इति शान्तरसस्यादूरविच्छेदः प्रकाश्यते । तत्र हेतुः—तपस्वीति । नित्ययोगे मतुप् । पुराणप्रसिद्धश्चायमर्थः 'शिवो योगरतः शश्वद्' इत्यादि । वज्रोऽशनिः, उपमानेन तत्स्वभावत्वं द्योत्यते । स्त्रीसन्निकर्षं परिहर्तुम् 'अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्' इति न्यायेन देवीसन्निकर्षेण ममावश्यं चित्तविकारो भविष्यति देव्या वैलक्ष्यविषादादिदर्शनेन कामपत्न्याः शोकानुसन्धानदर्शनेन च तपसो महान् विघ्नो भविष्यतीत्याशङ्क्येत्यर्थः, अन्तर्दधेऽन्तर्धानेन तद्देशवासमजहात् । अत्र भूतशब्दः सर्वपरिच्छदानामुपलक्षणम्, सर्वस्यापि स्वेच्छापरिकल्पितत्वादिति नारायणः ॥ ६३ ॥

**शैलात्मजाऽपि पितुरुच्छिरसोऽभिलाषं व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।**
**सख्योः समक्षमिति चाधिकजातलज्जा शून्या जगाम भवनाभिमुखी कथञ्चित् ॥६४॥**

शैलात्मजेति । शैलात्मजा पार्वत्यपि उच्छिरस उन्नतशिरसो महतः पितुरभिलाषं 'हरो वरोऽस्तु' इति मनोरथम्, ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा, समानजनसमक्षमवमानस्यातिदुस्सहत्वादिति भावः । शून्या निरुत्साहा सती कथञ्चित् कृच्छ्रेण भवनस्याभिमुखी जगामेति मल्लिनाथः ॥ ६४ ॥

न केवलं देवस्तद्देशवासमजहदपि तु शैलात्मजापीत्यपिशब्दार्थः । समक्षम् अक्ष्णोः समीपे । 'अव्ययं विभक्ति०' ( पा० २. १. ६. ) इत्यादिना समासः 'तृतीयासप्तम्योर्बहुलम्' ( पा० २. ४. ८४ ) इत्यम्भावः । इतिशब्दः सखीसाक्षात्कारस्य लज्जाधिक्ये हेतुत्वं द्योतयति । सौभाग्यभङ्गस्यान्यदर्शनमेवात्यन्तलज्जावहम्, किं पुनः सखीदर्शनमिति भावः । इत्थमभिप्रवृद्धस्य मनोरथस्यात्यन्तभङ्गे जाते सति सञ्जातायाश्चिन्ताया अनुभावमाह—शून्येति । आत्मानमप्यजानानेति भाव इति नारायणः ॥६४ ॥

**सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।**
**सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां प्रतिपथगतिरासीद् वेगदीर्घीकृताङ्गः ॥६५॥**

सपदीति । सपदि अद्रिर्हिमवान् रुद्रस्य संरम्भात् कोपाद् भीत्या, 'संरम्भः सम्भ्रमे कोपे' इति विश्वः । मुकुलिताक्षीं निमीलितनेत्राम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' ( पा० ५ ४. ११३ ) इति षच्प्रत्ययः । 'षिद्गौरादिभ्यश्च' ( पा० ४. १. ४१ ) इति ङीष् । अनुकम्पितुमर्हामनुकम्प्याम् । 'ऋहलोर्ण्यत्' ( पा० ३. १. १२४ ) इति ण्यत्प्रत्ययः । दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलिनीं बिभ्रत् सुरगज इव वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन् पन्थानं प्रतिगता प्रतिपथा मार्गानुसारिणी गतिर्यस्य स प्रतिपथगतिरासीत्, पन्थानमनुसृत्य जगामेत्यर्थः ॥ ६५ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां तृतीयः सर्गः ॥

प्रतिपथगतिः पन्थानं प्रतिगता प्रतिपथा । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । 'ऋक्पूरब्धू०' इत्यादिना समासान्तः । प्रतिपथा गतिर्यस्य स प्रतिपथगतिः । येन पथा पूर्वमागतस्तेनैव गतवानित्यर्थः । एतच्च वेगेन प्रतिपथगमनं वैलक्ष्यद्योतकम् । यथा सुरगजः पद्मिनीं बिभ्रद् यथागतं गच्छति, तथा हिमवान् पुत्रीं दोर्भ्यामित्यर्थः । अनेनोपमानेनानुरूपता द्योत्यते । गमनप्रकारमाह वेगदीर्घीकृताङ्ग इति । वेगेन सत्वरप्रयाणजेन दीर्घीकृतमभ्रं मेघो येन स तथा । 'अङ्गमित्यस्य स्थानेऽभ्रमिति नारायणेन पठ्यते' अभ्युन्नताङ्गसङ्घट्टनाद् दीर्घीकृतगगनासन्नमेघमण्डल इत्यर्थः । एतच्च विशेषणं सुरगजेऽपि योजनीयम् । अनेन विशेषणेन महाबलत्वं महाशरीरत्वञ्च द्योत्यत इति नारायणः ॥ ६५ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः ॥

---

# अथ महाकविभर्तृहरिविरचिते

## नीतिशतके प्रकीर्णाः श्लोकाः

अथ द्वाभ्यां मूर्खजनचित्तस्य दुराराध्यतामाह—

**प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरात्**
**समुद्रमपि सन्तरेत्प्रचलदूर्मिमालाकुलम् ।**
**भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्**
**नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ १ ॥**

प्रसह्येति । मकरः शिशुमाराख्यो जलग्राहविशेषः । तस्य वक्त्रे वदनगह्वरे दंष्ट्राणां निशिताग्रदशनविशेषाणाम्, अन्तरादन्तरालात्, अतिसङ्कटादित्यर्थः । प्रसह्य बलात्कारेण मणिं रत्नं दुरुद्धरमपीति भावः । उद्धरेत् उद्धर्तुं शक्नुयाद् जन इति शेषः । केनचिदवधानेनानयेदित्यर्थः ।

तथा प्रचलन्तो दोलायमाना य ऊर्मयस्तेषां मालाभिः परस्पराभिराकुलं संकुलम् उल्लोलकल्लोलोज्जृम्भितमित्यर्थः, समुद्रमपि दुस्तरमपीति भावः । सन्तरेत् सम्यक् तरितुं शक्नुयात् केनचित् प्लवनसाधनेनेति भावः । लङ्घयेदिति पाठे हनुमानिव केनचिच्छक्तिविशेषेण लङ्घितुं शक्नुयादित्यर्थः । तथा कोपितं सञ्जातकोपं कोपवशात् सफूत्कारं जिह्वया सृक्किप्रान्तौ लेलिहानमित्यर्थः । 'तदस्य संजातं तारकादिभ्य इतच्' (पा० ५. २. ३६) इतीतच्प्रत्ययः । तारकादिराकृतिगणः । भुजङ्गं सर्वमपि दुर्द्धरमपीति भावः । शिरसि केशपाशे पुष्पेण तुल्यं पुष्पवत् पुष्पस्रजमिवेत्यर्थः । 'तेन तुल्यं क्रिया चेद् वतिः' (पा० ५. १. ११५) इति वतिप्रत्ययः, धारयेत् धारयितुं शक्नुयात् । मणिमन्त्रादिसाधनेनेति भावः । किन्तु प्रतिनिविष्टमभिनिवेशाक्रान्तं दुराग्रहाविष्टमिति यावत् । मूर्खजनस्य दुर्विदग्धस्य चित्तं नाराधयेत् आराधयितुं समाधातुं न शक्नुयात् उपायालाभादिति भावः । मकरदंष्ट्रान्तःस्थमण्युद्धरणादिप्रायं मूर्खजनचित्तसमाराधनमिति श्लोकार्थः ॥ १ ॥

एवं दुर्लभवस्तुसाधने दुष्करकार्यकरणे च सम्भावनया शक्तिरुक्ता न मूर्खचित्तप्रसाधने, इदानीमत्यन्तदुर्लभवस्त्वपि प्रसाधयेन्न तु तच्चित्तमित्याह—

**लभेत सिकतासु तैलमपि यत्नतः पीडय-**
**न्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।**
**कदाचिदपि पर्यटञ्छशविषाणमासादये-**
**न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ २ ॥**

लभेतेति । यत्नतः कुतश्चित्प्रयत्नात् 'पञ्चम्यास्तसिल्' (पा० ५. ३. ७) पीडयन् केनचिद् यन्त्रेण सम्मर्दयन् सिकतासु वालुकास्वपि कालत्रयेऽप्यन्तःस्नेहानधिकरणभूतास्वपीति भावः । तैलं स्नेहं लभेत लब्धुं शक्नुयात् । 'स्नेहे तैलच्' (पा० वा० ५. २. २६) इत्यनुशासनान्नात्र तिलसम्बन्धित्वाशङ्काकलङ्कावतार इति द्रष्टव्यम् । तथा पातुमिच्छा पिपासा 'पा पाने' इत्यस्माद्धातोः सन्नन्तात् स्त्रियामप्रत्यये टाप्, तयाऽर्दितः पीडितस्तृष्णातुरः सन्नित्यर्थः । मृगतृष्णिकासु च मरुमरीचिकास्वपि वा जलभ्रममात्रदायिनीष्वपीति भावः । मृगतृष्णाशब्दात् स्वार्थे कप्रत्यये 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' (पा० ७.३.४४) इतीकारः । सलिलं जलं पिबेत् पातुं शक्नुयात् । पाघ्राध्मा०' (पा० ७. ३. ७८) इत्यादिना पिबतेः (पाधातोः) पिबादेशः । तथा पर्यटन् तत्र तत्र वनान्तरे सञ्चरन् कदाचित् कस्मिंश्चित् समये शशस्य मृगविशेषस्य विषाणं शृङ्गमपि वाङ्मात्रगोचरमपीति भावः । आसादयेदधिगन्तुं शक्नुयात् न तु प्रतिनिविष्टेत्यादि पूर्ववत् । सिकतातैललाभादिवदत्यन्तदुर्घटं मूर्खचित्तसमाराधनमिति भावः । 'मृगतृष्णिकाजलशशविषाणयोर्गगनारविन्दवन्ध्यापुत्रवदत्यन्तासङ्गतत्वमुक्तं सुरेश्वरवार्तिके । 'मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः' इति । पद्यद्वयेऽप्यस्मिन् मणिमुद्धरेदित्यादौ शक्यार्थे विधिलिङ्, तथा अपिशब्दः समुच्चये । सम्भावनायां चेत्तदनुवाद इति विवेकः । उभयथाप्यनुशासनसम्भवात् प्रकृतार्थोपपत्तेश्च । यथाहामरसिंहः "गर्हासमुच्चयप्रश्न-

शङ्कासम्भावनास्वपि'' इति । अत्र समुद्रं लङ्घयेदित्युदाजहार स्वामी । अत्र मण्युद्धरणाद्यसम्बन्धेऽपि तत्सम्बधाभिधानादतिशयोक्तिः । श्लोकद्वयमेतत् पृथ्वीवृत्तम् । तदुक्तं केदारेण वृत्तरत्नाकरे ''जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः'' इति । अत एव सिकतासु तैलमित्यत्र, मृगतृष्णिकासु सलिलमित्यत्र, मूर्खजनचित्तमित्यत्र चाष्टमवर्णे विहितस्य विच्छेदस्याभावाद् यतिभ्रष्टनामा दोषः । इममेव केचित् पदस्थयतिं वदन्ति । तदुक्तं विद्यानाथेन ''यत्र स्थाने यतिभ्रंशस्तद् यतिभ्रष्टमुच्यते'' इति । ''कुत्रचित् पदमध्ये तु यतिमिच्छन्ति सूरयः । यत्र पूर्वापरौ भागौ न स्यातामेकवर्णकौ'' । इति दर्तिलवचनमपीदं समाधातुं न शक्नोति । पूर्वापरभागयोरेकवर्णगतत्वात् । निरङ्कुशाः खलु कवयो भवन्ति सर्वपथीना इत्यलमतिप्रपञ्चेन ॥ २ ॥

अथाग्न्यादीनां निवारणे शास्त्रप्रतिपादितजलादिरूपहेतून् प्रतिपाद्य मौर्ख्यस्य निवारणे शास्त्राभावं हेत्वभावं च स्फुटीकुर्वन्नाह—

**शक्यो वारयितुं जलेन हुतभुक् शूर्पेण सूर्यातपो**
**नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गौर्गर्दभः ।**
**व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रैः प्रयोगैर्विषं**
**सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ३ ॥**

शक्य इति । हुतभुक् हुतं होमद्रव्यं हविः पुरोडाशवपादि भुनक्तीति हुतभुग् वैदिकाग्निः । अत्र तु गृहादिदाहकृल्लौकिकोऽग्निरिति मन्तव्यम् । जलेनोदकेन वारयितुं निवारयितुं शक्यः । एवंरीत्या सूर्यातपो घर्मः सूर्यस्य रवेरातपः शूर्पेण वारयितुं शक्य इति पदद्वयस्योत्तरत्राप्यनुषङ्ग इति मन्तव्यम् । समदो मदसहितो नागेन्द्रो गजश्रेष्ठो निशिताङ्कुशेन तीक्ष्णाङ्कुशेन । गौर्वृषभो गर्दभो रासभश्च दण्डेन । व्याधिः कुष्ठादिरोगो भेषजसङ्ग्रहैरौषधसङ्ग्रहणैश्च । अत्र चकारान्महामन्त्रजपहोमसुरार्चनदानादिकमपि गृह्यते । ''तच्छान्तिरौषधैर्दानैर्जपैर्होमसुरार्चनैः'' इति स्मरणात् । विषं कालकूटादि । विविधैर्नानाविधैर्मन्तारं त्रायन्ते रक्षन्तीति मन्त्रास्तैर्मन्त्रैः प्रणवादिभिर्विविधैः प्रयोगैश्च निवारयितुं शक्यमित्यर्थः । तस्मात् सर्वस्य प्राणिहिंसाकारणीभूतदुष्टजन्तुजातस्य शास्त्रविहितं शास्त्रविधिचोदितमौषधं जलादिरूपं भेषजमस्ति । परं मूर्खतानिवारणसमर्थं सुभाषितादिरूपं नास्ति शास्त्रविहितं न वर्तते । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

अथ विद्याधनस्य प्रसिद्धधनवैलक्षण्यवर्णनद्वारा विदुषामुत्कर्षमापादयन्नेतेषु गौरवेण विश्वासोत्पादनार्थं नृपान् सम्बोधयति—

**हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा-**
**प्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।**
**कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं**
**येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ ४ ॥**

हर्तुरिति । यद् विद्याख्यं धनं हर्तुश्चौरादेः, हर्तुमिति पाठेऽपहर्तुमित्यर्थः । गोचरं न याति विषयतां न प्राप्नोतीति भावप्रधानो निर्देशः, तस्यात्यन्तदुर्ग्रहत्वादिति भावः । तथा सर्वदा

कालत्रयेऽपि किमप्यनिर्वाच्यं शं सुखं पुष्णाति प्रवर्धयति। "अर्थानामर्जने दुःखम्" इति स्मरणात् प्रसिद्धं तु नैवमिति भावः। अनिशं सर्वदाऽर्थिभ्यो विद्यार्थिभ्यो याचकेभ्यश्च प्रतिपाद्यमानं व्याख्यायमानं दीयमानमपि च परामुत्कृष्टां वृद्धिमभ्युच्छ्रयं प्राप्नोति, विद्याया व्याख्यानेनाभिवृद्धिसम्भवादिति भावः। तथा कल्पान्तेषु प्रलयेष्वपि निधनं नाशं न प्रयाति न नश्यतीत्यर्थः। कल्पान्तेष्वपीति बहुवचनग्रहणं विद्याधनस्यात्यन्तविनाशाभावप्रकाशनार्थम्। प्रसिद्धं तूक्तविपरीतमिति भावः। तदुक्तम्

न भोगहार्या नच बन्धुहार्या न भ्रातृहार्या नच राजहार्याः।
स्वदेशमित्रं परदेशबन्धुं विद्यासुधां ये पुरुषाः पिबन्ति ॥ इति ॥

तद् विद्याख्यं विद्याभिधानम्। यत्तदोर्नित्यसम्बन्धात्तच्छब्दस्याध्याहारः। अन्तर्धनमभ्यन्तरस्थवित्तं येषां पुरुषाणामस्तीति शेषः। अतस्तान्विद्याधनान् प्रति हे नृपा राजानः, मानं कोपं दुराग्रहमिति यावत्। उज्झत त्यजत तैर्विद्वद्भिः सह कः पुमान् स्पर्धते तान् को निगृह्णाति न कोऽपीत्यर्थः, ततस्ते सदा गौरवेण बहु माननीया इति भावः। अत्रोपमानात् प्रसिद्धधनादुपमेयस्य विद्याधनस्याधिक्यकथनाद् व्यतिरेकालङ्कारः 'उपमानाद् यदन्यस्य व्यतिरेकः स एव सः' इति काव्यप्रकाशकारलक्षणात्। वृत्तं शार्दूलविक्रीडितम् ॥ ४ ॥

किं बहुना ब्रह्मापि तदीयवैदग्ध्यापहरणे न शक्त इति दृष्टान्तमुखेनाह—

**अम्भोजिनीवनविहारविलासमेव हंसस्य हन्ति नितरां कुपितो विधाता।**
**न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥५॥**

अम्भोजिनीति। विधाता ब्रह्मा कुपितः केनचिद्धेतुना क्रुद्धः सन् हंसस्य निजयानमरालस्याम्भोजिनीवने पद्मिनीवने यो विहारः क्रीडा स एव विलासो लीला तमेव न त्वन्यत् नितरामतिशयेन हन्ति नाशयति। विलासमेकमिति पाठे, एकं केवलं विलासमित्यन्वयः। अम्भोजाकरसंशोषणेन तत्र विहारभङ्गमात्रमेव कर्तुं शक्नोतीत्यर्थः। किं त्वसौ विधाता हंसस्य दुग्धजलयोः क्षीरनीरयोर्भेदविधौ विभागकरणे विषये प्रसिद्धां प्रख्यातां वैदग्ध्यकीर्तिं वैदग्ध्येन

'कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते।'

इत्युक्तलक्षणनैपुण्येन प्रयुक्ता या कीर्तिस्तामपहर्तुं न शक्नोति। हंसो हि क्षीरमिश्रिते नीरे नीरं विहाय क्षीरं गृह्णातीति प्रसिद्धः। एवं कुपितो राजा स्वविषयवासादिभङ्गमात्रमेव कर्तुं शक्नोति न तु तेषामशेषविद्यापरिशीलनजनितचातुर्यभङ्गमतो निष्कोपेन भवितव्यं विद्वत्सु राज्ञेति तात्पर्यम्। अत्राप्रकृतविधातृवृत्तान्तकथनात् प्रस्तुतराजविद्वज्जनप्रतीतेरप्रस्तुतप्रशंसालङ्कारः। वसन्ततिलकावृत्तम्। 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ ५ ॥

अथ विदुषां गुणवर्णनपूर्वकं लोकव्यवस्थापकत्वमाह—

**दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने**
**प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम्।**
**शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता**
**ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ ६ ॥**

दाक्षिण्यमिति । स्वजने बन्धुजनेष्वित्यर्थः, जातावेकवचनम् । एवमुत्तरत्रापि दाक्षिण्यं छन्द नुवर्तनम् । अन्यथा विनिन्देयुरिति भावः । 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु ।' परिजने भृत्यजनेषु विषये दया दारिद्र्यादितद्दुःख प्रहाणेच्छा । अन्यथा विजह्युरिति भावः । दुर्जने खलजनेषु विषये सदा शाठ्यं विप्रियकारित्वम् । अन्यथाऽधिक्षिपेरन्निति भावः । साधुजने सज्जनेषु विषये प्रीतिः स्नेह आदर इति यावत् । अन्यथऽनुतपेरन्निति भावः । नृपजने राजसु विषये नयो नीतिरनुवर्तनतात्पर्यमिति यावत् । अन्यथा दण्डयेरन्निति भावः । विद्वज्जने पण्डितजनेषु विषये आर्जवमवक्रता । अन्यथा निषिध्येरन् ( निषेधेयुः ) इति भावः । शत्रुजने शत्रुजनेषु विषये शौर्यं विक्रान्तत्वम् । अन्यथा निपातयेरन्निति भावः । गुरुजने पित्रादिषु विषये क्षमा सहिष्णुत्वम् । अन्यथा शपेरन्निति भावः । कान्ताजने नारीजनेषु विषये धृष्टता प्रागल्भ्यं च । अन्यथा वशीकुर्युरिति भावः । इत्येवमुक्तविधासु कलासु शिल्पेषु । 'कला शिल्पे कालभेदे चन्द्रांशे कलना कला ।' इति वैजयन्ती । ये च पुरुषाः कुशला निपुणास्तेषु पुरुषेष्वेव लोकस्थितिर्लोकमर्यादाऽस्तीति शेषः । त एव लोकव्यवस्थासंस्थापका न तूक्तगुणरहिता इत्यर्थः । एवंभूतास्तु विद्वांस एव न त्वन्य इति हृदयम् ॥ ६ ॥

**सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः**
**स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः ।**
**आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं**
**तुष्टे विष्टपहारिणीष्टदहरौ सम्प्राप्यते देहिना ॥ ७ ॥**

सूनुरिति । सूनुः पुत्रः सच्चरितः सद्वृत्तः, सती प्रियतमा, स्वामी प्रसादोन्मुखः स्निग्धं स्नेहयुक्तं मित्रमवञ्चकः परिजनः स्वकीयजनसमुदायः, निःक्लेशलेशमाधिरहितं स्वस्थं मनः आकारो रुचिरः स्थिरश्च विभवो विभवसामर्थ्यं विद्ययाऽवदातं शोभितं मुखमित्येते पदार्था विष्टपहारिणि स्वर्गवासिनीष्टदहरौ नारायणे तुष्टे प्रसन्ने सति देहिना पुरुषेण प्राप्यन्ते ॥ ७ ॥

विक्रान्तत्वे वयोऽपि न हेतुरिति विनिगमयति—

**सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।**
**प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसां हेतुः ॥ ८ ॥**

सिंह इति । शिशुर्बालोऽपि विक्रान्तत्वयोग्यतारहितावस्थोऽपीत्यर्थः । सिंहो मदमलिना दानपयःपङ्किलाः कपोला भित्तय इव येषां तेषु गजेषु मत्तमातङ्गेषु निपतति कुम्भस्थलविदारणार्थमिति भावः । इयं बाल्येऽपि विक्रान्तता सत्त्ववतां बलाढ्यानां प्रकृतिः स्वभावः । कुतः ? वयो बाल्यादि तेजसां प्रतापशालिनामिति तेजस्तद्वतोरभेदाध्यवसायोऽत्यन्ततेजस्वित्वप्रकाशनार्थकः, हेतुः कारणं न भवति खलु 'तेजसां हि न वयः समीक्ष्यते' इति न्यायादिति भावः । 'वयः पक्षिणि बाल्यादौ' इत्यमरः । आर्यावृत्तभेदः ॥ ८ ॥

ननु तथाऽपि गुणाभावेऽपि केवलवित्तस्याकिञ्चित्करत्वमेवेत्याशङ्क्य तस्यैवाशेषगुणावहत्वं तावदाह—

**यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।**
**स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ९ ॥**

यस्येति । यस्य नरस्य वित्तमस्ति सम्भवति स नरः कुले जातः कुलीनो महाकुलप्रसूतः । "कुलात्खः" इति खप्रत्ययः । स एव पण्डितो विद्वान् स एव श्रुतवाञ्शास्त्रज्ञः, यद्वा श्रुतं श्रवणम् "नपुंसके भावे क्तः" तदस्यास्तीति श्रुतवान् धर्मशास्त्राद्याकर्णनचतुरोऽपीत्यर्थः । स एव गुणज्ञो गुणग्राही अत्र "आतोऽनुपसर्गे कः" इत्यादि व्याख्यातं प्राक् । स एव वक्ता वाग्मी च । स एव दर्शनीयः सुन्दरश्च । उक्तगुणराहित्येऽपीति भावः । नन्वेवं चेत् पुरुषस्यैकेन वित्तेनेदृग्गुणसाकल्यसम्पन्नत्वं कुत इत्याशङ्क्याह सर्वे गुणाः पूर्वोक्तकुलीनत्वादयः काञ्चनं वित्तमाश्रयन्ति अतोऽनेनैव सकलगुणसम्पत्तिसम्भवे किमन्यैः प्रत्येकप्रयासाद्यैरिति भावः । अत्र वित्तस्यैतावद्गुणसम्पादकत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिः । वृत्तमुपजातिः ॥ ९ ॥

अथ गुणावगुणप्रणालिकामाह—

**लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः**
**सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।**
**सौजन्यं यदि किं बलेन महिमा यद्यस्ति किं मण्डनैः**
**सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ १० ॥**

लोभ इति । लोभो धनादिवाञ्छास्ति चेदगुणेन दुर्गुणेन किम्, न किञ्चिदपीत्यर्थः, तस्यैवात्यन्तनिन्दावहत्वादिति भावः । पिशुनता परोक्षे परदोषसूचकतास्ति चेत्पातकैर्ब्रह्महत्यादिभिः किम्, तस्या एव निरयपातनदक्षत्वादिति भावः । सत्यं यथार्थभाषणं समदर्शित्वं वास्ति चेत्तपसा चान्द्रायणादिना किम्, तस्यैव परिशोधकत्वादिति भावः । शुचि द्रोहचिन्तादिराहित्येन शुद्धं मनोऽस्ति यदि तीर्थेन प्रयागादिना किम्, तस्यैवापवर्गमूलकत्वादिति भावः । "यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो भवेत्" इति स्मरणमात्रमूलम् । सौजन्यं सुजनभावोऽस्ति यदि, बलेन परिजनेन किं तस्यैवाशेषकार्यनिर्वाहकत्वादिति भावः । महिमा माहात्म्यमस्ति यदि, मण्डनैः कुण्डलहाराद्यलङ्करणैः किम्, तस्यैवोपस्कारहेतुभूतत्वादिति भावः । अपयशोऽपकीर्तिरस्ति यदि मृत्युना मरणेन किम्, तद्धन्मृतप्रायत्वादिति भावः । एवं विचार्य तद्गुणार्जनतत्परेण भवितव्यं पुरुषेण, अन्यथा दौर्जन्यमनायाससाध्यमिति वाक्यशेषत्वेनोन्नेयम् ॥ १० ॥

अथैषां प्रसिद्धविलक्षणमण्डनसम्पत्तिमाह—

**करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता**
**मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।**
**हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-**
**र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ११ ॥**

कर इति । करे हस्ते श्लाघ्यः सकललोकप्रशस्तस्त्यागो दानं मण्डनम्, न तु कङ्कणम् । "दानेन पाणिर्न तु कङ्कणेन" इति स्वेनैवाग्रे वक्ष्यमाणत्वात् । शिरसि गुरुपादयोः प्रणयिताभिवादनतात्पर्यं मण्डनम्, न तु मणिहिरण्मयकोटीरादिः मुखे वक्त्रे सत्या वाणी सूनृतभाषणं

मण्डनं न तु ताम्बूलचर्वणादि । भुजयोरतुलं निरुपमानं विजयि जयशीलञ्च । "जिदृक्षि" इत्यादिना इनिः । वीर्यं बलं मण्डनं न तु केयूरादि । हृद्यन्तरङ्गे स्वच्छा वृत्तिर्निष्कलङ्कव्यापारो मण्डनं न तु हाररुचकादि । हृच्छब्दस्य वक्षःस्थलवाचकत्वमपि सम्भवतीति कृत्वाऽभेदेन निर्देशः। श्रवणयोः कर्णयोरधिगतं श्रुतं शास्त्रमेव । "श्रुतं शास्त्रावधृतयोः" इति विश्वः । मण्डनं न तु कुण्डले । "श्रोत्रं श्रुतेनैव न कुण्डलेन" इति वक्ष्यति । इदं पूर्वोक्तदानादिकं सर्वमैश्वर्येण धन-रत्नसम्पत्त्या विनापि । "पृथग्विना" इत्यादिना विकल्पात्तृतीया । प्रकृत्या स्वभावेन महतां महात्मनां सौजन्यसम्पन्नानामित्यर्थः । "प्रकृत्यादिभ्यः" इति तृतीयासमासः । मण्डनं भूषणम् । तस्यैव लोकोत्तररामणीयकहेतुत्वादिति भावः । शिखरिणी वृत्तम् ॥ ११ ॥

अथ द्वाभ्यामेव सुजनवृत्तस्यासाधारण्यमाह—

**प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं**
**त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।**
**विपद्युच्चैर्धैर्यं पदमनुविधेयं च महतां**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १२ ॥**

प्रियेति । न्यायादनपेता न्याय्या नीतिप्रवणा वृत्तिर्जीवनम् । "वृत्तिर्वर्तनजीवने" इत्यमरः । प्रीणातीति प्रिया, इष्टा न त्वन्या तस्या एव श्रेयस्करत्वादिति भावः । "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । असुभङ्गे प्राणप्रयासेऽपि किमुतान्यदेति भावः । मलिनं दुष्कर्म असुकरमकर्तव्यं, न तु 'आपत्काले नास्ति मर्यादा' इति न्यायात् सुकरं तस्यैवैहिकामुष्मिकफलदत्वादिति भावः । "ईषद्दुः०" इत्यादिना खल्प्रत्ययः ततो नञ्समासः । असन्तः, कुहकास्तु नाभ्यर्थ्याः कस्मिंश्चिद् विषयेऽपि न प्रार्थनीयाः, किंतु सन्त एव, तेषामुपेक्ष्यत्वादिति भावः । यद्यपि "न पादादौ खल्वादयः" इत्याह वामनस्तथापि कविप्रौढ्या तुशब्दस्य पादादौ प्रयोगः । सुहृदपि प्राणप्रियबन्धुरपि किमुतान्य इति भावः । "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातनात् साधुः । कृशधनो धनहीन-श्चेन्न याच्यो याचितुं न योग्यः । धनादिकमिति शेषः । किन्तु धनपरिपूर्ण एव । तथाविधया-च्ञायाऽनुचितत्वादिति भावः । विपद्यनर्थसङ्कटेऽप्युच्चैर्धैर्यं महाधैर्यं न तु भयविह्वलत्वम् । आपत्स्वप्य-विलुप्तधैर्यनिलयाः' "विपदि धैर्यमथाभ्युदये क्षमा" इति चोक्तत्वादिति भावः । महतां पूज्या-नामनुविधेयमनुकूलं पदं व्यवसितं, न त्वननुकूलं पदम् । तथाभूतस्यैव श्लाघ्यत्वादिति भावः । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यभिधानात् । इतीदमेतत् विषममसाधारणतया दुष्करमसिधाराव्रतमस्यभिचरितव्रतं सत्पुरुषाणां केनोद्दिष्टमुपदिष्टं न केनापीत्यर्थः; स्वतःसिद्धत्वा-दिति भावः । अत्रासिधारावन्निशितत्वादसिधारासञ्चारवत्सावधानेनैकाग्रतया विधेयत्वाद् वाऽसि-धाराव्रतम् । यद्वाऽसिधारया व्यवहरतां व्रतं वीरव्रतमित्यर्थः । शिखरिणीवृत्तम् ॥ १२ ॥

**प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः**
**प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।**
**अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १३ ॥**

प्रदानमिति । प्रच्छन्नं प्रदानं गुप्तदानं नतु प्रकाशम् । तथाभूतदानस्य महाफलश्रवणादिति भावः । गृहं निजमन्दिरं प्रत्युपगते सत्यर्थिनीति शेषः । सम्भ्रमविधिः प्रत्युत्थानाभिवादनादिसत्वरव्यापारविधानं च, नतु वैमुख्यं तस्यैव शास्त्रोदिताचारत्वादिति भावः । प्रियं तदभीष्टं कृत्वा मौनं तूष्णीम्भावश्चापरिकीर्तनमिति यावत् । न तु प्रकटनं कृतस्य परिकीर्तनम्, "न दत्वा परिकीर्तयेत्" इति मनुस्मरणादिति भावः । सदसि राजविद्वत्सभायामुपकृतेः कथनं परोपकारप्रख्यापनं च नतु तत्र तूष्णींशीलत्वमन्यथा कृतघ्नत्वप्रसङ्गादिति भावः । लक्ष्म्यां सम्पत्त्यामनुत्सेको गर्वराहित्यं नतु मदान्धत्वम् । "सम्पत्स्वनुत्सेकिनः" इत्युक्तत्वादिति भावः । निरभिभवसारा अनिन्दापराः परकथाः पुरुषान्तरप्रसङ्गाश्च, नतु गर्हणपराः । "आत्मप्रशंसां परगर्हामपि च वर्जयेत" इत्यादिस्मरणात् । सतामित्यादि, वृत्तं पूर्ववत् ॥ १३ ॥

अथ सन्मित्रलक्षणमाह—

**पापान्निवारयति योजयते हिताय गुह्यं निगूहति गुणान् प्रकटीकरोति ।**
**आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥१४॥**

पापादिति । पापात्पापाचरणान्निवारयति निवर्तयति । धर्मोपदेशेन दुष्कर्मप्रवृत्तेर्विरमयतीत्यर्थः । 'जुगुप्साविराम०' इत्यादिना पञ्चमी । हिताय योजयते सत्कर्माचरणाय प्रवर्तयतीत्यर्थः। यद्वा श्रेयःसङ्ग्रहार्थं प्रोत्साहयतीत्यर्थः । गुह्यं गोप्यं निगूहत्याच्छादयति न कुत्रापि प्रकटयतीत्यर्थः। गुणान् सौशील्यादिसद्गुणान् प्रकटीकरोति प्रख्यापयति नतु निगूहतीत्यर्थः । आपद्गतमतिसङ्कटस्थमपि न जहाति न त्यजति । 'तन्मित्रमापदि सुखे च समक्रियं यत्' इत्युक्तत्वादिति भावः । काले व्यसनादिसमये ददाति वाञ्छितं दिशति । तदिदं पापनिवारणादिकं सर्वं सन्तः सत्पुरुषाः सन्मित्रस्याकैतवसुहृदो लक्षणं स्वरूपं वदन्ति । वसन्ततिलकावृत्तम् ॥ १४ ॥

अथ विधेयलोकं सम्बोधयन् सदाचारं शिक्षयति—

**तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः**
**सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।**
**मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं**
**कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम् ॥ १५ ॥**

तृष्णामिति । हे जनेत्यत्राध्याहार्यं सर्वत्रापि, मध्यमपुरुषप्रयोगसम्भवात् । अलभ्येषु परधनेषु लाभाभिलाषस्तृष्णा तां छिन्धि वैराग्यशस्त्रेण विदारय, अन्यथाऽनेकाशापाशनिबद्धत्वेन क्लेशभागित्वं स्यादिति भावः । परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः क्षमा तां भज सेवस्व, अन्यथोग्रभावेन कार्यहानिः स्यादिति भावः । मदं विद्याजनितदर्पं जहि विज्ञानेन विनाशय अन्यथा विवेकशून्यतयाऽकार्यकरणप्रवृत्तावनर्थप्राप्तिः स्यादिति भावः । पापे पापकर्माचरणे रतिं प्रीतिं मा कृथा अज्ञानेन मा कार्षीः, किन्तु धर्मं चरेत्याद्युपदेशवचनेन सत्कर्माचरण एव मतिं कुर्वित्यर्थः, । अन्यथा निरयपातः स्यादिति भावः । करोतेर्लुङि थास् । 'न माङ्योगे' इत्यट्प्रतिषेधः । सत्यं सूनृतं ब्रूहि । 'सत्यं वद' इति वचनेन यथार्थमेव वचनं वेदत्यर्थः, अन्यथा 'नानृ-

तात् पातकं परम्' इति न्यायादविवेकित्वप्रसक्तिः स्यादिति भावः । साधुपदवीं सन्मार्गमनुयाहि धर्मशास्त्रानुरोधेनानुसर । अन्यथोत्पथप्रतिपन्नत्वे दोषापत्तिः स्यादिति भावः । विद्वज्जनोपदेशेन कृतार्थीकरणशीलं विद्वज्जनं पण्डितमण्डलं सेवस्व ।

'यस्तु पर्यटते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ।' इति वचनात् बुद्धिवैशद्यार्थं शुश्रूषस्व । अन्यथा बुद्ध्यवैशद्याशिक्षिताद्यभियोगः स्यादिति भावः । मान्यान् पूज्यान् मानय यथार्हं पूजय । अन्यथा 'समासमाभ्यां विषमसमे पूज्ये' इति गौतमसूत्रात् ।

'अपूज्या यत्र पूज्यन्ते पूज्याश्चैवावमानिताः । अयशो महदाप्नोति धनाद् धर्माच्च हीयते ॥'

इत्यादिस्मरणाच्च, अकीर्तिः सुकृतधनहीयमानत्वरूपाऽश्रेयःप्राप्तिः स्यादिति भावः । किं बहुना विद्विषः शत्रूनपि किमुतान्याननुनय 'समः शत्रौ च मित्रे च' इति भगवद्वचनात् प्रसादय । अन्यथा रन्ध्रेषु पातयिष्यन्तीति भावः । प्रश्रयं गुर्वाचार्यादिषु नम्रत्वम् । विनयमिति यावत् । 'गुरौ नम्रता' इत्युक्तत्वात् । प्रख्यापय प्रकटय, अन्यथा दुर्विनीतत्वापवादप्रसङ्गः स्यादिति भावः । कीर्तिं पालय जन्मसाफल्यार्थं कीर्तिनिर्वहणे प्रयत्नं कुर्वित्यर्थः । अन्यथा 'क्षितितले किं जन्म कीर्तिं विना' इति वचनाज्जीवन्मृतत्वापत्तिः स्यादिति भावः । दुःखिते सञ्जातदुःखेषु भूतेष्वित्यर्थः, तारकादित्वादितच् । जातावेकवचनम् । दयां दुःखप्रहाणेच्छालक्षणां 'दुःखितेषु करुणा' इति शास्त्रानुरोधात् । कुरु विधेहि । अन्यथा चित्तशुद्ध्यसम्भवादिति भावः । एतत्सर्वं तृष्णाच्छेदादिकं सतां सज्जनानां चेष्टितं व्यापारः । यदि सौजन्ययशःकामी तदैवं प्रवर्तस्व । अन्यथा पुरुषार्थलाभासम्भवादित्यर्थः । शार्दूलविक्रीडितम् ॥ १५ ॥

ईदृशा विरला एवेति निगमयति—

**मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।**
**परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥१६॥**

मनसीति । मनसि वचसि काये मनोवाक्कायेषु पुण्यमेव पीयूषममृतं तेन पूर्णाः करणत्रितयेनापि सत्कर्माचरणतत्परा इत्यर्थः 'पीयूषममृतं सुधा' इत्यमरः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । लक्षणया त्रिभुवनस्थजनानित्यर्थः । 'तद्धितार्थ०' इत्यादिना समासः । पात्रादित्वान्न स्त्रीत्वम् । उपकारश्रेणिभिर्हिताचरणपरम्पराभिः प्रीणयन्तः । सन्तोषयन्तः । 'प्रीञ् प्रीणने' इति धातोश्चुरादिकाण्णिचि शतृप्रत्ययः । धूञ्प्रीञोर्नुग् वक्तव्यः' इति नुगागमः । परेषां गुणपरमाणून् अत्यल्पगुणानपीत्यर्थः । यतोऽणुर्नास्ति स परमाणुरित्याहुः । पर्वतीकृत्य महत्तरान् कृत्वा । अभूततद्भावे च्विः । 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति समासः । नित्यं ख्यापयन्तः प्रशंसन्तः । तथा निजहृदि स्वान्तःकरणे विकसन्तः सन्तुष्यन्तः सन्तः सत्पुरुषाः कियन्तः कतिपये विरला एवेत्यर्थः, सन्ति न तु सान्द्राः । एतादृशगुणसम्पत्तेरसाधारण्यादिति भावः । 'निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।' इत्येव पाठः । तथा चोक्तम्— 'सौजन्यामृतसिन्धवः' इत्यादि । मालिनीवृत्तम् ॥ १६ ॥

धैर्यगुणन्यक्कारः कथञ्चिदपि न युज्यत इति सदृष्टान्तमाह—

**कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।**
**अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव ॥ १७ ॥**

कदर्थितस्येति । कुत्सितोऽर्थः कदर्थः । 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः कदर्थीकृतः कदर्थितस्तस्य नीचैः कृतस्यापि सतो धैर्येण वृत्तिर्वर्तनं यस्य तस्य सम्बन्धि धैर्यमेव गुणः प्रमार्ष्टुमधःकर्तुं न शक्यते । तत्र दृष्टान्तः । अधोमुखस्य कृतस्यावाङ्मुखीकृतस्यापि वह्नेः शिखा ज्वालाः कदाचिदेव कदाचिदप्यधो न यान्ति किन्तूर्ध्वमेव प्रसरन्तीत्यर्थः । तद्वद्धीरस्यापि धैर्यगुण इति विवेकः । उपजातिवृत्तम् ॥ १७ ॥

नन्वेवं शीलस्यात्यन्तावश्यकत्वमुक्तम्, तद्भावे को लाभ इत्याशङ्कायामाह—

**वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-**
**न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।**
**व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते**
**यस्याङ्गेऽखिललोकवल्लभतरं शीलं समुन्मीलति ॥ १८ ॥**

वह्निरिति । तस्य पुंसो वह्निः, दाहकोऽपीति भावः । जलायते जलमिवाचरति तद्वच्छीतलो भवतीत्यर्थः । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः । एवं सर्वत्र प्रयोज्यम् । जलनिधिः, दुस्तरोऽपीति भावः । कुल्यायतेऽल्पनदीवाचरति । तस्येत्यस्य सर्वत्रान्वयोऽवगन्तव्यः । तत्क्षणात्तस्मिन्नेव क्षणे नतु विलम्बेनेत्यर्थः । मेरुः स्वल्पशिलायतेऽल्पदृषदिवाचरति । मृगपतिः सिंहः, हिंस्रोऽपीतिभावः, सद्यः कुरङ्गायते हरिण इवाचरति । व्यालः सर्पः विषरोगभीषणोऽपीति भावः । माल्यगुणायते पुष्पस्रगिवाचरति । विषमेव रसो द्रवः प्राणप्रयाणहेतुरिति भावः । पीयूषवर्षायतेऽमृतवृष्टिरिवाचरति । कस्येत्याकाङ्क्षायामाह—यस्य पुंसोऽङ्गेऽखिललोकानामशेषजनानां वल्लभतरमत्यन्तमनोहरं शीलं सत्स्वभावः समुन्मीलति समुल्लसति तस्येति सम्बन्धः । शीलसम्पन्नस्य दुःखहेतवोऽपि सुखहेतव एव भवन्ति । अयमेव परमलाभ इति भावः । अत्र क्यङर्थादौपम्यप्रतीतेरुपमाभेदः । 'इवादिलोपे द्विविधे णमुलि क्यति चिङ्क्यपि । तथा वाक्ये समासे च सप्तधैषा प्रकीर्तिता ॥' इति, एषोपमेत्यर्थः । शार्दूलविक्रीडितम् ॥ १८ ॥

शीलमेवाशेषभूषणमित्याह—

**ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो**
**ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।**
**अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥१९॥**

ऐश्वर्यस्येति । ऐश्वर्यस्य स्वाम्यस्य सुजनता विभूषणम्, नतु दौर्जन्यम् । शौर्यस्य विक्रान्तत्वस्य वाक्संयमो वाङ्नियमो विभूषणम् । नत्वसम्बद्धप्रलापित्वम् । ज्ञानस्य कर्तव्याकर्तव्यविवेकस्यात्मविषयकस्य वा उपशमो विषयोपरतिर्विभूषणम्, नतु लोलुपत्वम् । श्रुतस्य शास्त्रस्य

विनयो विभूषणम्, नतु गर्वोद्रिक्तता। वित्तस्य पात्रे व्ययः सत्पात्रे प्रतिपत्तिर्विभूषणम्, नतु विटनटादिषु। तपसश्चान्द्रायणादेरक्रोधः क्रोधराहित्यम्, क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते, विभूषणम्, नतु कोपशीलत्वम्। प्रभवितुः समर्थस्य क्षमा सहिष्णुत्वं विभूषणम्, नतूद्दण्डता। धर्मस्य सत्पात्रे दानस्य निर्व्याजता व्याजराहित्यं विभूषणम्, नतु द्रव्यनाशदुःखम्। तथा सर्वकारणमैश्वर्यादिसमस्तनिदानमिदं पूर्वोपवर्णितमेकमेव शीलं सर्वेषामपि सर्वपुंसां परं सौजन्याद्यपेक्षयाप्युत्कृष्टं भूषणमलङ्कारः; अतः सर्वथापि शीलमेवाश्रयणीयमिति तात्पर्यम्। शार्दूलविक्रीडितम् ॥ १९ ॥

**को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः**
**का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः।**
**कः शूरो विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धनं**
**विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ २० ॥**

क इति। लाभः को गुणिसङ्गमः, असुखं किं प्राज्ञादितरे मूर्खास्तैः सह सङ्गतिः, हानिः का समयच्युतिः, यस्मिन् समये यदवश्यं कर्तव्यमेव तन्न कृतं समयो गतः सैव हानिः, निपुणता ज्ञातृता का या धर्मतत्त्वे रतिः प्रीतिः, शूरः को विजितानीन्द्रियाणि येनासौ, प्रियतमा का याऽनुव्रता पतिव्रता, धनं किं विद्या, सुखं किम् अप्रवासगमनम्, राज्यं किम्, आज्ञाफलं ययाऽऽज्ञया सर्वं शुभाशुभं भवति तदेव राज्यम् ॥ २० ॥

**लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाम्।**
**तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥२१॥**

लज्जेति। सत्यमेव व्रतं तस्मिन् व्यसनमासक्तिर्येषां त एवंविधास्तेजस्विनः प्रभाववन्तः पुरुषाः सुखं यथा स्यात्तथा असून् प्राणानपि त्यजन्ति पुनः स्वां स्वकीयां जननीं मातरमिव प्रतिज्ञां न त्यजन्ति, कीदृशीं प्रतिज्ञां मातरं च ? असत्कर्मणि प्रवृत्तिलक्षणलज्जारूपो यो गुणौघो गुणप्रवाहस्तस्य जननीमुत्पादिकाम्। पुनः कीदृशीम् ? अत्यन्तं शुद्धं हृदयमन्तःकरणं यस्यां यस्या वा ताम्। पुनः कीदृशीम् अनुलक्षणेन वर्तमानाम्। अनेन सत्यभाषिणा पुंसा प्राणा अपि त्याज्याः परन्तु स्वीयप्रतिज्ञा न त्याज्येति सूचितम्। वसन्ततिलकावृत्तम् ॥ २१ ॥

॥ इति श्रीमहाकविभर्तृहरिविरचिते नीतिशतके प्रकीर्णाः श्लोकाः ॥

———:o:———

# अथ महाकविभर्तृहरिविरचिते

## वैराग्यशतके प्रकीर्णाः श्लोकाः ।

अथ रागस्य तृष्णामूलकत्वात्तद्दूषणं विना न वैराग्यसिद्धिरित्यभिप्रेत्य तत्सिद्ध्यर्थमादौ तावत्तत्परिपन्थिभूतां तृष्णां दूषयति 'भ्रान्तम्' इत्यादिचतुर्भिः श्लोकैः । तत्र प्रथमं स्वकर्मकष्टनिवेदनपूर्वकं तृष्णां सम्बोध्य त्रिभिर्दूषयति—

**भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं**
**त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।**
**भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-**
**त्तृष्णे जृम्भसि पापकर्मपिशुने नाद्यापि सन्तुष्यसि ॥ १ ॥**

भ्रान्तमिति । अनेकैर्बहुभिर्दुर्गैः पार्वतवार्क्षजलदुर्गादिभिर्विषमं विकटम् । दुःसञ्चारमित्यर्थः । देशं भ्रान्तं सञ्चरितम्, तथापि किञ्चिदल्पमपि फलं धनं न प्राप्तं न लब्धम् । बहुफलापेक्षयैव दुर्गमेऽपि देशे सञ्चारः कृतः, फलं त्वीषदपि न प्राप्तमित्यर्थः । अत्र देशशब्दस्य नपुंसकत्वं निघण्ट्वन्तरेषु मृग्यम् । यद्वा देशमुद्दिश्य भ्रान्तम्, भावे क्तः । अथवा 'नीवृज्जनपदौ देशविषयौ' इत्यभिधानात् पुंलिङ्गस्यापि देशशब्दस्य नपुंसकत्वसम्बन्धोऽनुवर्तत इति भाष्यकारप्रयोगादिष्यते । तथोचितमनुरूपं जातिकुलयोर्जातिब्राह्मणत्वादिः, कुलं सद्वंशः, तयोरभिमानम् । इति सापेक्षत्वेऽपि गमकत्वात्समासः । त्यक्त्वापि विसृज्य निष्फला फलशून्या सेवा परिचर्या कृता । धनाढ्यानामिति शेषः । उभयत्रापि कष्टमेवावशिष्टम् । न त्वन्यत्किञ्चिदपीत्यर्थः । 'लाभनिष्पत्तियोगेषु बले शल्ये फले धनम्' इति वैजयन्ती । तथा मानविवर्जितमभिमानशून्यं यथा तथा बहुमानविहीनमिति वा । आशङ्कयाऽऽकाङ्क्षया लोलुपत्वेनेति यावत् । परगृहेषु काकेन बलिभुजा तुल्यं काकवत् । 'तेन तुल्यं क्रिया चेद् वतिः' इति वतिप्रत्ययः । भुक्तम् । अभिमानत्यागेऽपि न बहुमानपूर्वकम्, किन्तु सावमानमेव दत्तं परान्नपिण्डमभ्यवहृतमित्यर्थः । तथापि पापकर्मणां पापात्मनां पिशुने सूचिके, येषां तृष्णा त एव पापिष्ठा इति भावः । यद्वा पापकर्मणां दुष्कर्मणां पिशुने प्रवर्तिके इत्यर्थः । एतद्व्यतिरेकेण दुष्कर्मप्रवर्तकान्तराभावादिति भावः ['पापकर्मनिरते' इत्यपि पाठः । तस्मिन् पाठे सति—पापकर्मणि निरते सक्ते एवंविधे हे तृष्णे—इत्येवं व्याख्यातव्यम् । ] हे तृष्णे विषयस्पृहे, जृम्भसि प्रवृद्धा भवसि किं त्वद्यापि, ईदृक्कष्टकर्मप्रवर्तनदशायामपीति भावः । न सन्तुष्यसि सन्तुष्टा न भवसि । विरतिं न प्राप्नोषीत्यर्थः । इतः परमपि किञ्चिद् दुष्टकर्म कारयितुम् अपेक्षास्तीवेति प्रतिभातीति भावः । शार्दूलविक्रीडितम् ॥ १ ॥

**खलालापाः सोढाः कथमपि तदाराधनपरै-**
**र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।**

**कृतो वित्तस्तम्भप्रतिहतधियामञ्जलिरपि**
**त्वमाशे ! मोघाशे ! किमपरमतो नर्तयसि माम् ॥ २ ॥**

खलालापा इति । खलानां दुर्जनानामालापा दुर्भाषितानि तदाराधनपरैस्तत्सेवातत्परैः । अस्माभिरिति शेषः । कथमप्यतिकृच्छ्रेण सोढाः क्षान्ताः । अन्यथाभावे कार्यभङ्गो भवेदिति भावः । तथा अन्तरभ्यन्तर एव बाष्पं तदालापश्रवणजनिताश्रु निगृह्य नियम्य शून्येन निरुत्सुकेन मनसोपलक्षितैर्निर्भिन्नान्तःकरणैरित्यर्थः । हसितम्, हासोऽपि कृत इति शेषः, कर्तरि क्तः । दुरालापैराक्षिप्ता अपि ते सन्तोषवन्त एव, नतु निर्विण्णा अतो विश्वसनीया इति बुद्धयुत्पादनार्थं निर्विषयमिथ्याहासोऽपि विरचित इत्यर्थः । तथा वित्तेन धनेन यः स्तम्भो जडीभावस्तेन प्रतिहता मूढा विवेकशून्येति यावत्, धीर्येषां तेषां धनदुर्मदान्धानामित्यर्थः । 'स्तम्भौ स्थूणजडीभावौ' इत्यमरः। अञ्जलिरपि कृतः प्रह्वीभावोऽपि विहितः । तथापि न किञ्चिल्लब्धमिति भावः । अतो मोघाशे व्यर्थमनोरथे आशे तृष्णे ! 'आशा तृष्णादिशोः प्रोक्ता' इति विश्वः । त्वं मामतोऽस्मात् खलालापसहनादिकृत्यात् अपरमितरत् किं कार्यं नर्तयसि नाटयसि, मया किं कार्यं कारयसीति यावत् । न किमपीत्यर्थः । नाटयितव्यार्थस्य वैयर्थ्यादिति भावः । ननु पूर्वश्लोके मयेत्येकवचनं प्रयुक्तम् अत्र तु तदाराधनपरैरिति बहुत्वम् । कथमेतत्समञ्जसमिति चेत्, सत्यम् । तृष्णोपहतानां बहुत्वात्तत्प्रयुक्ततत्तत्कर्मकर्तृभेदेन क्वचिदेकवचनं क्वचिद् बहुवचनं च विवक्षितमित्यवधेयम् । एवमुत्तरत्रापि योज्यम् । शिखरिणी वृत्तम् ॥ २ ॥

अथ तृष्णादुर्विलसितेनैव महदनुचितमप्याचरितमित्याह—

**अमीषां प्राणानां तुलितबिसिनीपत्रपयसां**
**कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।**
**यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां**
**कृतं मानव्रीडैर्निजगुणकथापातकमपि ॥ ३ ॥**

अमीषामिति । किञ्च तुलितानि समीकृतानि बिसिनीपत्रपयांसि येषां तेषां नलिनीदलगतजललवतरलानाम् । अतिभङ्गुराणामित्यर्थः । अमीषामविश्वसनीयानां प्राणानां कृते । एतत्प्राणत्राणार्थमित्यर्थः । 'अर्थे कृतेऽर्थे शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ' इति वचनात् विगलितो भ्रष्टो कर्तव्याकर्तव्यविचारो येषां तैरस्माभिर्दुष्कर्म न व्यवसितं नोद्युक्तम् । सर्वमपि व्यवसितमेवेत्यर्थः। कुतः ? यद् यस्मात् कारणाद् द्रविणमदेन धनमदेन निःसंज्ञानि स्तब्धानि मनांसि येषां तेषां विमर्शशून्यान्तः–करणानामाढ्यानां धनिकानाम् । 'इभ्य आढ्यो धनी स्वामी' इत्यमरः । अग्रे पुरस्तान्मानव्रीडैर्निर्लज्जैरस्माभिर्निजगुणकथापातकं स्वकीयविद्याविनयादिगुणप्रशंसारूपपापमपि कृतम्, तच्च निषिद्धम् 'आत्मप्रशंसां परगर्हणामिव वर्जयेत्' इत्यापस्तम्बस्मरणात् । 'आत्मप्रशंसा मरणं परनिन्दा तथैव च' इति वचनादात्मगुणप्रशंसैवात्मोपघातः । तस्य च निरयप्रापकत्वेन पातकत्वञ्च । निजगुणप्रख्यापनेन धनं सम्पाद्य तेन प्राणान् सन्तर्पयिष्याम इत्याशयेनेदृशानुचितमाचरितम् । तथापि न तल्लब्धमित्यपिशब्दार्थः । वृत्तं पूर्ववत् ॥ ३ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो मूढः कायस्तदपि मरणापायचकितः ॥ ४ ॥

निवृत्तेति । भोगेच्छा विषयानुस्पृहा निवृत्ता निर्गता । अत्र जरादूषणाभिनिवेशपारवश्येनेत्थमुक्तम् । तेन 'तृष्णैका तरुणायते' इत्यविरोधः । पुरुष इति यो बहुमानः सन्मानः सोऽपि गलितोऽपगतस्तत्प्रयोजकपौरुषाद्यपायादिति भावः । यद्वा पुरुषाणां बहुमानस्तत्कर्तृकसन्मानः सोऽपि गलितः पूर्ववत्पुरुषादिना न बहु मन्यत इत्यर्थः । इदानीं तादृशगौरवालाभादिति भावः । अथ परेतबान्धवशोचनापदेशेन स्वस्यापन्दतां सूचयन्नाह—जीवितसमाः प्राणतुल्याः सुहृदो बन्धवश्च समानाः सबहुमानाः सन्तः सपदि सद्य एव जरावस्थायाः प्रागेवेत्यर्थः । स्वर्याताः स्वर्गं गता निजसुकृतपाकेन पुण्यलोकं गता इत्यर्थः । जरादुर्दशापत्त्या बहुमानरहितोऽहं न यातो हीनजीवन इति भावः । यद्वा समानाः सवयसो जीवितसमा बन्धवश्च सपदि सद्य एव दुःखस्यापत्तेः पूर्वमेवेति भावः । स्वर्याता लोकान्तरगता न त्वहमित्यर्थः । 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इत्यमरः । ननु कश्चित् कालं स्थीयताम्, किमनेनामङ्गलाशंसनेनेत्यत आह—शनैर्मन्दं यष्ट्युत्थानं यष्ट्यवष्टम्भनेनोत्थानं प्राप्तमिति शेषः । पादपाटवविघट्टनात्स्वयमुत्थाने सञ्चारे वा शक्तिर्नास्तीत्यर्थः । न स्वेतावन्मात्रमेव किन्तु नयने चक्षुषी च, प्रगृह्यत्वादस्य अहो इत्यनेन सन्ध्यभावः । घनं निबिडं यत्तिमिरं, पाटलाख्यनेत्ररोगविशेषो वैद्यशास्त्रप्रसिद्धः । 'तिमिरं ध्वान्ते नेत्रामयेऽपि च' इति विश्वप्रकाशः । तेन रुद्धे निरुद्धशुद्धप्रसारे अर्थग्रहणासमर्थे जाते इत्यर्थः । अन्धकपङ्गुजीवनाद्वरं मरणमेवेति भावः, एतत् सर्वमनर्थजातं जराकृतमेवेति हृदयम् । तदपि तथापि मूढो ज्ञानहीनः कायो देहो मरणेन योऽपायो विश्लेषो नाश इति यावत् । तस्माच्चकितो भीतः, भवतीति शेषः । अत्र देहिधर्मस्तदुपाधौ देह उपचर्यते, अहो ईदृक्कष्टदशायामपि जीविताशैव बलीयसी, न विज्ञानोदय इत्याश्चर्यमित्यर्थः । एतदपि तृष्णाविलसितमेवेति भावः । शिखरिणी ॥ ४ ॥

यदुक्तं योगिनस्तृष्णानदीं तीर्त्वा नन्दन्ति, तत्र विषयपरित्यागमन्तरा तदसम्भवादथ विषयपरित्यागविडम्बनोच्यते—अथेति । अथ तृष्णादूषणानन्तरं विषयाणां रूपादीनाम् । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः । यद्वा स्रक्चन्दनादिभोग्यवस्तूनां परित्यागः संन्यासस्तस्य विडम्बनाऽनुकरणम् । अभिनय इति यावत् । उच्यत इति शेषः । तत्प्रकारमेवाह चतुर्भिः—

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ५ ॥

न संसारेति । संसारेऽनादिभवपरम्परायामुत्पन्नमुदितम् । फलोद्देशेनानुष्ठितमिति यावत्,

चरितं पुण्याचरणम् । आदिकर्मणि क्तः कर्तरि च । कुशलं क्षेमकरं नानुपश्यामि नानुसन्दधामीत्यर्थः। कुत एतद् वैपरीत्यमित्याशङ्क्य तत्राह—विपाक इति । पुण्यानां पुराकृतसुकृतानां विपाकः सम्पद्रूपपरिपाको विमृशतः तत्फलं परामृशतो मे मम भयं जनयत्युत्पादयति । तत्पर्यालोचने सम्पदां पुण्यव्ययलभ्यत्वेन विपद्रूपत्वाद् भयजनकमित्यर्थः । अत एवोक्तं कविकुलसार्वभौमेन श्रीहर्षेण—'पूर्वपुण्यविभवव्ययलब्धाः संपदो विपद एव विमृष्टाः' इति । अथवा पुण्यानां ज्योतिष्टोमादिसत्कर्मणां विपाकः स्वर्गादिरूपफलपरिणामो विमृशतः पूर्वोत्तरं पर्यालोचयतो मे भयं जनयति । 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति भगवद्वचनात् । यावन्नियतकालं स्वर्गसुखमनुभूय पुण्यक्षये सति पुनर्मर्त्यलोकप्रवेशे महाविषादगर्भनिरयवासजन्मपरम्परादुःखप्रभवत्वात् भयङ्कर-त्वमित्यर्थः । अतः कुशलं न पश्यामीत्यर्थः, अत एव तत्फलभूतानां भोगानामप्यनर्थहेतुत्वमेवेत्याह—महद्भिर्भूयिष्ठैः पुण्यौघैः पुण्यसञ्चयैर्हेतुभिः, चिरपरिगृहीताश्चिरकालमारभ्य संगृहीता विषयाश्च भोगा अपि विषयिणां विषयासक्तानां व्यसनं विपत्तिम् , दुःखमिति यावत् दातुमिव दातुमेव । इवशब्दोऽत्रावधारणार्थको नतूत्प्रेक्षाभिव्यञ्जकः, अन्यथार्थान्तरन्यासादिति वेदितव्यम् । महान्तः प्रवृद्धा जायन्ते भवन्ति । व्यसनप्रदानप्रवणैवैतद्वृद्धिर्नान्यदानप्रवणेत्यर्थः । एवमैहिकामुष्मिकभोगा-नामनिष्टानुबन्धित्वात्तत्त्याग एव श्रेयानिति भावः । शिखरिणी वृत्तम् ॥ ५ ॥

अथ सर्वथा विषयाः परित्याज्या इति वक्तुं तेषां व्यवस्थितिमाह—

**अवश्यं यातारश्चिरतरमुषित्वापि विषया**
**वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।**
**व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः**
**स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ ६ ॥**

अवश्यमिति । विषया भोगाश्चिरतरं बहुकालमुषित्वापि स्थित्वाऽपि । 'वसतिक्षुधोरिट्' इति इडागमः । 'वचिस्वपि०' इत्यादिना सम्प्रसारणम् । अवश्यं नियतं सिद्धमिति यावत् । यातारो गन्तार आगमापायित्वेनास्थिरत्वात्परिचयानादरेण पुरुषं त्यक्त्वा यातार एव नतु परिच-यवशाद् यावज्जीवं स्थातार इत्यर्थः । तदुक्तं भगवता—

'मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ! ॥' इति ।

यातेर्लुट् । अतो वियोगे विषयविरहे को भेदः को वा विशेषो न कोऽपीत्यर्थः । स्वकर्तृ-कत्यागे वा पुरुषकर्तृकत्यागे वा तस्य जायमानत्वादिति भावः । तथाहि यद् यस्मात् जनो विषया-सक्तः पुमान् अमून् विषयान् स्वयं न त्यजति गुणान् गृहीत्वा न विसृजति, स्वयमेव त्यजति चेत्तर्हि तेन कृतार्थो भवतीति भावः । एतेन विषयकर्तृकत्यागे तु न कृतार्थत्वमिति सूच्यते । ननु कुत एतद् वैषम्यमित्याशङ्क्य तत्र व्यवस्थामाह—स्वातन्त्र्यात् कर्तृत्वात् स्वाच्छन्द्यादिति यावत् । 'स्वतन्त्रः कर्ता' इत्यनुशासनात् । व्रजन्तः पुरुषं विसृजन्तः सन्तः । विषया इति शेषः । मनसो-ऽतुलपरितापाय दुरन्तसन्तापाय भवन्तीति शेषः । अत्यन्तदुःखकारिणो भवन्तीत्यर्थः । स्वयं

स्वेन कर्त्रा पुरुषेण त्यक्तास्तुच्छत्वभावनया विसृष्टाश्चेत्तर्हि, एते विषया अनन्तमपरिच्छिन्नं शमसुखं तृष्णोपशान्तिसुखम्। परमानन्दमिति यावत्। विदधति कुर्वन्ति। हिरवधारणे। तदुक्तम्—

'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाशमसुखस्यैते नार्हतः षोडशीं कलाम् ॥'

इत्यतोऽनर्थापादकविषयकर्तृकत्यागात् पूर्वमेव स्वयं तत्त्यागतत्परेण भवितव्यं श्रेयस्कामेनेति भावः। वृत्तं पूर्ववत् ॥ ६ ॥

ननु कीदृग्विधाः पुरुषा विषयत्यागसमर्था इत्याकाङ्क्षायां ज्ञानिन एव समर्था नतु मादृशा इत्याह—

**ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं**
**यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः।**
**सम्प्राप्तान्न पुरा न सम्प्रति नच प्राप्तौ दृढप्रत्यया-**
**न्वाञ्छामात्रपरिग्रहानपि परं त्यक्तुं न शक्ता वयम् ॥ ७ ॥**

ब्रह्मेति। ब्रह्मज्ञानेन यो विवेकस्तत्त्वविचारस्तेन निर्मला निष्कलङ्का। असम्भावनादिरहितेति यावत् सा धीर्येषां ते ज्ञानवन्त इत्यर्थः। दुष्करं कर्तुमशक्यं कर्म कुर्वन्ति। अहो इत्याश्चर्ये। किं तद् दुष्करमित्याह—यद् यस्मादुपभोगं भजन्तीत्युपभोगभाञ्जि स्रक्चन्दनादिभोगसाधनत्वेनानुभूयमानान्यपीत्यर्थः। धनानि वित्तानि निःस्पृहाः निरीहाः सन्तः एकान्ततो नितान्तं निरवशेषमिति यावत्, मुञ्चन्ति विसृजन्ति। इदमेवातिदुष्करमत्यन्ताश्चर्यं चेत्यर्थः। वयमस्मद्विधा अज्ञानिनस्तु पुरा पुरातनकाले न सम्प्राप्तान् नाधिगतान् सम्प्रतीदानीं वर्तमानकालेऽपि प्राप्तौ वा भविष्यत्काललाभेऽपि वा न दृढप्रत्ययान् न दृढविश्वासान्। अविश्वसनीयानिति यावत् कालत्रयेऽप्यसम्भाव्यमानत्वादित्यर्थः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। किन्तु वाञ्छामात्रपरिग्रहान् मनोरथमात्रसङ्गृहीतान् मनोव्यापारमात्रगोचरीकृतानपीत्यर्थः। अनुभूयमानांस्तु किमुतेति भावः। विषयानिति शेषः, त्यक्तुं न परमत्यन्तं शक्ता असमर्थाः। अतस्त एव धन्या इति भावः। 'शकधृष०' इत्यादिना तुमुन्। विषयपरित्यागे ब्रह्मज्ञानमेव मुख्यसाधनम्, अतस्तत्सम्पादनेन तत्परित्यागोऽवश्यं कर्तव्य इति फलितार्थः। शार्दूलविक्रीडितम् ॥ ७ ॥

अथ कस्यचिद् विषयाभिभूतस्य निर्वेदवचनमभिनीयाह—

**भिक्षाशनं तदपि नीरसमेकवारं**
**शय्या च भूः परिजनो निजदेहमात्रम्।**
**वस्त्रं विशीर्णशतखण्डमयी च कन्था**
**हा हा तथापि विषया न परित्यजन्ति ॥ ८ ॥**

भिक्षाशनमिति। भिक्षा भैक्षमित्यर्थः। अशनमाहारः। तदपि नीरसं भिक्षान्नाशनमपि नीरसं मधुराम्लादिरसहीनम्। तदप्येकवारं, नतु द्वित्रिवारमित्यर्थः। शय्या शयनीयं भूः, साप्यास्तरणादिरहितेति भावः। परिजनः सेवकजनो निजदेहमात्रं स्वस्य स्वयमेव परिजनः, नतु कश्चिदन्योऽस्तीत्यर्थः। वस्त्रमाच्छादनं च विशीर्णा शतखण्डमयी विशेषेण जीर्णा एकचीवरशकलनिर्मिता कन्था। तथापि ईदृक् कष्टदशायामपि विषया भोगवाञ्छा न विसृजन्ति मामिति शेषः।

हा हेति विषादविस्मयातिशयाभिनिवेदनार्था द्विरुक्तिः। पापिष्ठा इमे विषया हतमेव घ्नन्तीति भावः। अत्र विषयपरित्यागकारणसामग्र्यां सत्यां कार्यानुदयाद् विशेषोक्तिरलङ्कारः। 'ततसामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात्। वसन्ततिलका ॥ ८ ॥

अथ मानिनस्तावद् बन्धुयाच्ञायाः परमन्यत्र भिक्षाशनतात्पर्येण प्राणधारणमित्याह—

**पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालिं कपालिं**
**ह्यादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठे।**
**द्वारं द्वारं प्रविष्टो वरमुदरदरीपूरणाय क्षुधार्तो**
**मानी प्राणैः सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ९ ॥**

पुण्य इति। न्यायगर्भं मीमांसाशास्त्रोक्तप्रकारगर्भितं यथा तथा। यद्वा नीयन्ते ज्ञाप्यन्ते बुभुत्सितार्था एभिरिति न्याया वेदशास्त्रपुराणादयस्ते गर्भे कुक्षौ येषां ते न्यायगर्भाः, अधीताखिलविद्या इत्यर्थः। तथाभूता द्विजा ब्राह्मणाः, तैर्हुता आज्यादिहविर्भिः सुतर्पिता ये हुतभुजोऽग्नयस्तेषां धूमेन धूम्राणि कृष्णलोहितवर्णानि उपकण्ठान्यन्तिकप्रदेशा यस्य तस्मिन्। 'धूम्रधूमलौ कृष्णलोहिते, 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इति चामरः। अत एव पुण्ये पवित्रे महति विपुले च। विशेषणद्वयेन निस्सङ्कोचसञ्चारार्हत्वं सूच्यते। ग्रामेऽग्रहारे वनेऽरण्ये वा, तत्रापि वानप्रस्थादीनां विद्यमानत्वादिति भावः। सितपटेन श्वेतवस्त्रेण छन्ना परेषां दृष्टिगोचरत्वाभावार्थमाच्छादिता, तथा शिष्टाचारात्। पालिरश्रिर्यस्यास्ताम् 'पालिस्त्र्यश्र्यङ्कपङ्क्तिषु' इति वैजयन्ती। कपालिं भिक्षाहरणोचितशरावमादाय गृहीत्वा क्षुधार्तः क्षुत्पीडितो मान्यभिमानवान् पुरुष इति शेषः। उदरमेव दरी गिरिगह्वरं, तस्याः पूरणाय पूर्त्यर्थमित्यर्थः, तादर्थ्ये चतुर्थी। अथवोदरं पूरयितुमित्यर्थः। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। द्वारं द्वारं प्रतिद्वारम्, गृहमेधिनामिति शेषः। 'नित्यवीप्सयोः' इति वीप्सायां द्विरुक्तिः। प्रविष्टः भिक्षार्थमित्यर्थः। प्राणैः सनाथः सहितश्चेत् भिक्षाशनेन प्राणधारणतत्परः स्याच्चेदित्यर्थः। वरं मनाक्प्रियम्। 'दैवाद्वृत्ते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः। दिने दिनेऽनुदिनम्, प्रत्यहमित्यर्थः। यथार्थेऽव्ययीभावः। तुल्यकुल्येषु समानकुलेषु समानकुलोद्भवेषु तन्मध्य इत्यर्थः। दीनः पुनर्दैन्यवांश्चेत्, न वरम्। बन्धुमध्ये याच्ञादैन्यनीचजीवनाद् वरं भिक्षान्नेन प्राणधारणम् 'न बन्धुमध्ये धनहीनजीवनम्' इति वचनादिति भावः। अत्र यद्यपि 'त्यजन्त्यसून् शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् इति वचनान्मानिनः सर्वदाऽयाचितत्वमेव मुख्यव्रतम्, तथापि यदि क्षुधातुरत्वेन याच्ञाप्रवृत्तिः स्यात्तदा कुत्रचिदपरिज्ञातदेशे श्रोत्रियगृहेषु कपालभिक्षान्नभक्षणेनोदरपूरणं कर्तव्यं नतु बन्धुजनयाचना प्राणसङ्कटेऽपि, तस्य परमनैच्यावहत्वादिति गूढाभिसन्धिः। स्रग्धरा ॥ ९ ॥

अथ विशिष्टगत्यन्तराभावं वितर्कद्वारा दूषयति—

**गङ्गातरङ्गकणशीकरशीतलानि विद्याधराध्युषितचारुशिलातलानि।**
**स्थानानि किं हिमवतः प्रलयं गतानि यत् सावमानपरपिण्डरता मनुष्याः ॥१०॥**

गङ्गेति । गङ्गातरङ्गाणां भागीरथीकल्लोलानां ये कणा बिन्दवस्तेषां शीकरैः प्रालेयप्रायलेशैः । अथवा कणाः स्थूलबिन्दवः, शीकराः सूक्ष्माः, तैः शीतलानि शिशिराणि । 'घनशीकर' इति वा पाठः । तथा सान्द्रा इत्यर्थः । विद्याधरैर्देवयोनिविशेषैरध्युषितान्यधिष्ठितानि । 'गत्यर्थाकर्मक०' इत्यादिना वसेः कर्मणि क्तः 'वचिस्वपि०' इत्यादिना सम्प्रसारणम् । अत एव चारूणि मनोहराणि शिलातलानि येषु तानि तथोक्तानि । विशेषणद्वयेनैतेन परमपवित्रत्वं च सूच्यते । हिमवतो हिमाद्रेः सम्बन्धीनि स्थानानि प्रान्तदेशाः प्रलयं गतानि किं नष्टानि किम् । किंशब्दोऽत्र वितर्के । 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः । ननु कुत एवं विद्यमानेष्ववस्थानेषु विनाशो वितर्क्यत इत्याशङ्क्य तत्र कारणमाह—यद् यस्मात् कारणान्मनुष्या जनाः सावमानेषु याच्ञया तिरस्काराचरणपूर्वकं दत्तेषु परपिण्डेषु परान्नेषु रता आसक्ताः, तादृक्परपिण्डाशनेन प्राणत्राणतत्परा जाता इत्यर्थः । यदि स्थानानि न नश्येयुस्तर्हि जना ईदृक्कष्टयाच्ञातत्परा न भवेयुः । तेषां नष्टत्वादेवेदृग्दुरवस्थापन्ना इति कृत्वा, एवं वितर्क्यत इति वाक्यार्थः । यद्वा गत्यन्तराभावं प्रश्नद्वारा दूषयति—गङ्गेति । किंशब्दोऽत्र प्रश्ने । नन्वेवं कुतः पृच्छ्यत इत्यत आह—यस्मात् कारणाद् हे मनुष्याः, सावमानपरपिण्डरता यूयं जाता इति शेषः । अतः प्रश्नस्यावकाश इति भावः । अन्यत् समानम् । एतेन दुर्भगयाच्ञापिशाचिकामूर्धन्यशनिं पातयित्वा गिरिपरिसरेषु सुखेन वर्तितव्यमिति सूचितम् । वसन्ततिलकावृत्तम् ॥ १० ॥

इदानीं पुनर्जीवनोपायान्तराभावं वितर्कद्वारा दूषयति—

**किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः**
**प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ।**
**वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां**
**दुःखाप्तस्वल्पवित्तस्मयपवनवशानर्तितभ्रूलतानि ॥ ११ ॥**

किमिति । कन्दरेभ्यो गुहाभ्यः सकाशात् कन्दाः कन्दमूलादिपदार्थाः क्षुन्निवारणक्षमा इति भावः । प्रलयं विनाशं विराममिति यावत्, उपगताः प्राप्ताः किम् 'जुगुप्साविराम०' इत्यादिना पञ्चमी । एवमुत्तरत्रापि । किंशब्दो वितर्के । तथा गिरिभ्यः सकाशात् निर्झरा वा प्रवाहाश्च वा, उपशमकरा इति भावः, प्रलयमुपगताः किमिति सम्बन्धः । 'प्रवाहो निर्झरो झरः' इत्यमरः । 'वा स्याद् विकल्पोपमयोरेवार्थे च समुच्चये' इति चामरः । तथा तरुभ्यो वृक्षेभ्यः सकाशात् सरसानि माधुर्यरसयुक्तानि फलानि बिभ्रतीति तथोक्ता वल्कलिन्यो वल्कलवत्यः, एतेन विशेषणद्वयेन सुभोज्यवस्तुसमृद्धत्वाच्छादनयोग्यते सूचिते इत्यवगन्तव्यम् । शाखाश्च प्रध्वस्ता वा विनष्टाः किम् । अव्ययानामनेकार्थत्वात् । ननु विद्यमानकन्दमूलादिष्वविद्यमानत्वं कुतो वितर्क्यत इति तत्राह—यद् यस्मात् प्रसभमत्यन्तमपगतप्रश्रयाणां विनयशून्यानां खलानां दुरीशानां दुःखाप्तमतिक्लेशेन प्राप्तं तदपि स्वल्पं यद् वित्तं धनं तेन यः स्मयो गर्वः स एव पवनः स्मयः पवन इव तद्वशादानर्तिताश्चालिता भ्रुव एव लता भ्रुवो लता इव च येषां तानि सविकाराणीत्यर्थः । स्मयपवनेत्यत्र भ्रूलता इत्यत्र चोपमारूपकयोः साधकबाधकप्रमाणाभावात्सन्देहसङ्करः । मुखानि वीक्ष्यन्ते दृश्यन्ते याच-

कजनैरिति शेषः । कन्दमूलादीनां विनष्टत्वादिव जनैर्दुरीश्वरपरिचर्यातत्परैर्भूयते जीवनोपायार्थमतस्तद्भाववितर्कस्यावकाश इति भावः । यद्वा जीवनोपायान्तराभावं प्रश्नद्वारा निन्दति—किं कन्दा इति । किंवाशब्दौ प्रश्ने । अत एवं प्रश्नः क्रियत इत्यत आह—यस्मात्कारणाद् दुर्विनीतदुरीश्वरमुखान्यवलोक्यन्ते युष्माभिस्तस्मादभावप्रश्नो युज्यत इति भावः । शेषं समानम् । अत्रायमभिसन्धिः—परमनैच्याहं शास्त्रनिषिद्धं च दुर्विनीतसेवनोपजीवनं परित्यक्तव्यम् । स्रग्धरा ॥ ११ ॥

अथ खलानां मुखानि दृश्यन्त इत्यनेन सूचितनिन्दां प्रकटयितुं चिरकालदुरीशसेवापरिच्छिन्नस्य कस्यचिन्निर्वेदवचनमभिनीयाह—

**पुण्यैर्मूलफलैस्तथा प्रणयिनीं वृत्तिं कुरुष्वाधुना**
**भूशय्यां नवपल्लवैरकृपणैरुत्तिष्ठ यावो वनम् ।**
**क्षुद्राणामविवेकगूढमनसां यत्रेश्वराणां सदा**
**वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते ॥ १२ ॥**

पुण्यैरिति । अधुना इदानीं पुण्यैः पवित्रैर्मूलफलैर्मूलैः कन्दमूलैः फलैः कदलीरसालपनसादिफलैश्च । अपवित्ररक्तमूलककलिङ्गफलादिभक्षणनिषेधस्मरणात् पुण्यैरित्युक्तम् । तथाऽनिर्वाच्यतया 'प्रियप्रणयिनीम्' इति पाठे हे प्रिय सखे, इत्यर्थः । प्रणयिनीं परमसुखावहतया प्रियतमाम् । विशिष्टकन्दमूलाद्यदनस्यानशनप्रायत्वात्तस्य च तपसा कल्मषं हन्तीति सकलकर्मनिवर्तनद्वारा परमसुखावहत्वादिति भावः । वृत्तिं जीविकाम् । 'वृत्तिर्वर्तनजीवने' इत्यमरः । कुरुष्व विधेहि । तथाऽकृपणैरम्लानैर्नवपल्लवैर्भुवि शय्यां च कुरुष्व । अत उत्तिष्ठोत्थितो भव विलम्बं मा कुर्वित्यर्थः । वनं प्रति यावो गच्छावः । यास्याव इत्यर्थः । किमनेन नीचसेवनेनेति शेषः । वर्तमानसामीप्ये वर्तमानप्रत्ययः । 'यामो वनम्' इति न साधीयान् पाठः । गमनेऽभ्युच्चयफलमाह—यत्र वने क्षुद्राणां दीनानाम्, कुतः ? अविवेकेनाज्ञानेन मूढानि कर्तव्याकर्तव्यविचारशून्यानि मनांसि येषां तेषां तथा सदा सर्वदा वित्तमेव व्याधिः सन्निपातादिरोगस्तेन यो विकारो विपरीतभावस्तेन विह्वला विकला अविस्पष्टा इति यावत् तथाभूता गिरो येषां तेषामीश्वराणां राज्ञां नामापि नामधेयमपि न श्रूयते नाकर्ण्यते । किमुत दर्शनसेवनादिकथेति भावः । तस्मादैहिकामुष्मिकफललेशसम्बन्धशून्यं नीचसेवनं परित्यज्य सकलश्रेयःसम्पादकं वनं व्रज । वनवास एवावश्यं कर्तव्य इति तात्पर्यम् । शार्दूलविक्रीडितम् ॥ १२ ॥

अथ च पुनः सत्यामपि निरवधिकनिरातङ्कजीवसाधनसामग्र्यां कृपणाः स्वकार्पण्यमत्यजन्तः परयाच्ञादैन्येन क्लिश्यन्ति, किं कर्तव्यमित्याह—

**फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां**
**पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।**
**मृदुस्पर्शा शय्या सुललितलतापल्लवमयी**
**सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥ १३ ॥**

फलमिति । प्रतिवनं वने वने । न त्वेकत्रैव क्लृप्तमित्यर्थः । 'अव्ययं विभक्ति०' इत्या-

दिना यथार्थेऽव्ययीभावः । न विद्यते खेदो यस्मिन् कर्मणि तद् यथा तथाऽखेदमक्लेशं स्वेच्छया स्वच्छन्देन लभ्यं प्राप्यं नतु परप्रेष्यमिति भावः । क्षित्यां रोहन्तीति क्षितिरुहः, क्विप् । तेषां कदलीरसालपनसादितरूणां फलमस्तीति शेषः । उदरपूरणपर्याप्तमिति भावः । तथा स्थाने स्थाने प्रतिस्थानम् । वीप्सायां द्विरुक्तिः । शिशिरमधुरम् । व्याख्यातमेतत् 'पिबति सलिलं शीतमधुरम्' इत्यत्र । पुण्यसरितां गङ्गागोदावर्यादिपुण्यनदीनां पयस्तीर्थम् । अस्तीति शेषः । स्नानपानाभ्यां बाह्याभ्यन्तरपङ्कप्रक्षालनद्वारा तृष्णोपशान्तिकरमिति भावः । एतेनोभयेषामपि शास्त्रसिद्धं परोपकारत्वं सूचितम् । तदुक्तम्—'परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः' इति । तथा मृदुरकठिनः कोमल इति यावत्, स्पर्शो यस्याः सा हंसतूलिकातल्पकल्पेत्यर्थः । कुतः ? सुललितान्यतिकोमलानि यानि लतापल्लवानि तन्मयी तत्प्रचुरा तैर्निर्मितेत्यर्थः । अथवा तन्मयी तद्विकारा 'विकारार्थे मयट्' ततो ङीप्, शय्या चास्तीति शेषः । सुखस्वापोचितेति भावः । तदपि तथापि धनिनां धनाढ्यानां द्वारि प्रतीहारप्रदेशे । 'स्त्रोद्वाद्वारं प्रतीहारः' इत्यमरः । कृपणा धनलिप्सापरतन्त्राः सन्तापं सहन्ते मृष्यन्ति, श्रेयोऽर्थिनां किं तत्रास्माकं कर्तव्यमित्यर्थः। अतः फललाभसम्बन्धशून्यां प्रत्युत बलवदनिष्टानुबन्धिनीं दुरन्तसन्तापकारिणीं परमकार्पण्यकर्णेजपामिहामुत्र च कीर्तिप्रतिष्ठाभञ्जनीं याच्ञादैन्यपरमनीचत्वाद्दूषणीं पापिष्ठामिमां दुरीश्वरद्वारा बहुवितर्दिकादुराकारडाकिनीं विवेकोच्चाटनमन्त्रेणोत्सार्यानेकश्रेयःसम्पादिकां वनवासजीविकां श्रियमेव समाश्रयेद् विद्वानिति तात्पर्यम् । तदुक्तं श्रीभागवते—

'चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नो वाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
शुद्धा गुहाः किमु न सन्ति महानुभावा यस्माद् भजन्ति यतयो धनदुर्मदान्धान् ॥' इति ।

शिखरिणीवृत्तम् ॥ १३ ॥

अथ तृष्णाया यावताप्युपसंहाराभावात् किं याच्ञादैन्येनेत्याह—

**ये सन्तोषनिरन्तरप्रमुदितास्तेषां न भिन्ना मुदो**
**ये त्वन्ये धनलुब्धसंकुलधियस्तेषां न तृष्णा हता ।**
**इत्थं कस्य कृते कृतः स विधिना कीदृक्पदं सम्पदां**
**स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ १४ ॥**

य इति । ये पुमांसो दैवाल्लब्धेन वस्तुना जनितो मनोविलासः सन्तोषस्तेन निरन्तरं सततं प्रमुदिताः परितुष्टास्तृप्ता इति यावद् । तेषां मुद आनन्दा न भिन्नाः किन्तु प्रवृद्धा एवेत्यर्थः । तथाऽन्य इतरे ये पुमांसो धने लुब्धा गार्ध्यवती अत एव सङ्कुला धीर्येषां ते तथोक्तास्तेषां तृष्णा वस्तुस्पृहा न हता न विरतेत्यर्थः, धनलोभस्येयत्ताभावादित्यर्थः । इत्थम्, एवं व्यवस्थिते सतीति शेषः । स प्रसिद्धः सम्पदां रत्नादिसमृद्धीनां तादृगित्थमिति वक्तुमशक्यं पदं स्थानम् । अनिर्वाच्यधनसम्पदास्पदमित्यर्थः । तथा स्वात्मन्येव स्वस्मिन्नेव समाप्तः पर्यवसितः, नतु परोपकारपर्याप्त इत्यर्थः । तादृशी हेममहिमा काञ्चनसम्पत्तिर्यस्य तथोक्तो मेरुर्विधिना ब्रह्मणा कस्य कृते कस्य पुंसः प्रयोजनार्थं कृतो निर्मितः । नित्यसन्तोषसम्पन्नानामनपेक्षितत्वादर्थलुब्धानामपर्याप्तत्वाच्चानुपयोगादिति भावः । अतो निरर्थकत्वादेव मह्यं न रोचते रुचिगोचरो न

भवति न सम्मत इत्यर्थः । 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । तस्मात् मेरुतुल्यधनलाभेऽपि तृष्णाधनपिशाच्याः सन्तोषाभावात्तत्प्रयुक्तयाच्ञादैन्यविभ्रान्तिं तत्त्वविचारेण निरस्य सन्तुष्टान्तःकरणैर्भवितव्यमायुष्मद्भिरिति तात्पर्यम् । शार्दूलविक्रीडितम् ॥ १५ ॥

तर्हि कथं जीवनमित्याशङ्क्य तदुपायं सपरिकरं निवेदयन्निगमयति—

**भिक्षाहारमदैन्यमप्रतिसुखं भीतिच्छिदं सर्वतो**
**दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।**
**सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं**
**शम्भोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ १५ ॥**

भिक्षेति । योगीश्वराः परमार्थतत्त्वज्ञा महायोगिनो भिक्षाहारं भैक्षाशनं (कर्म) न विद्यते याच्ञादैन्यं यस्मिंस्तत्तथोक्तम् 'देहि' इत्युच्चारणानन्तरमेव सद्गृहस्थैर्बहुमानपूर्वकं दीयमानत्वादिति भावः । यद् वा व्यावहारिकदैन्यसम्भवेऽपि पारमार्थिकदैन्याभावादिति भावः । न विद्यते प्रतिसुखं यस्य तत्तथोक्तं स्वयमेव निरतिशयसुखं नतु स्वस्य प्रतिभटभूतं सुखान्तरमस्तीत्यर्थः । सर्वतः सर्वत्रापि भीतिच्छिदं भयविनाशकम् । भिक्षाशनतत्परस्याकुतोभयत्वादिति भावः । दुष्टानां दुःखभावानां मात्सर्यमदाभिमानानामसहिष्णुत्वदर्पाहङ्काराणां मथनं निरासकं दुःखौघविध्वंसनं सांसारिकाशेषबाधानिवर्तकम् । यद्वा दुःखौघस्यैकविंशतिमहादुःखसमुदायस्य विध्वंसनं विच्छेदकम् । एकविंशतिमहादुःखध्वंसरूपमोक्षनिदानमित्यर्थः । 'आत्यन्तिकदुःखध्वंसो मोक्षः' इति वैशेषिकास्तार्किकाश्च । अत्र यत् किञ्चिद् वक्तव्यमस्ति विस्तरभयान्नोच्यते । सर्वत्र सर्वेष्वित्यर्थः । तत्रापि, अन्वहं प्रतिदिनं तत्रापि चाप्रयत्नं यत्नं विनैव सुलभम्, सुखलभ्यमित्यर्थः । साधूनामनहङ्कारिणां प्रियमिष्टं पावनं पवित्रं शम्भोः शिवस्य सत्रं तृप्तिसाधनमित्यर्थः । 'रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते' इत्यनेनैवोक्तत्वात् । यद्वा शम्भोः सत्रं शम्भुभक्तिनिरतान्नसत्रमित्यर्थः । खण्डमण्डलाधिपतिसत्रं तु नश्वरम् । इदं तु सकलभुवनाधीश्वरप्रवर्तितत्वाच्छाश्वतमिति भावः । अत एवावार्यं न केनापि निवारयितुं शक्यम् अक्षयनिधिमविनाशिनिधानं च । नित्योपयोगेऽप्यक्षयमिति भावः । शंसन्ति कथयन्ति, अनुभवसिद्धत्वादित्थं वर्णयन्तीत्यर्थः । अतोऽनर्थपरम्पराजनितदैन्यं याच्ञादैन्यं विहायोक्तरीत्या समस्तसद्गुणविचित्रं शम्भुसत्रं समाश्रयणीयमिति भावः । वृत्तं पूर्ववत् ॥ १५ ॥

अथ भोगानामस्थैर्यकथने याच्ञादैन्यमदूषितप्रायमेवेति मनसि निधाय तद्दूषणानन्तरं भोगास्थैर्यमाह—

**भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं**
**माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।**
**शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद् भयं**
**सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ १६ ॥**

भोग इति । भोगे स्रक्चन्दनादिसुखानुभवे । 'भोगः सुखे""अहेश्च फणकाययोः' इत्यमरः । रोगाद् वातपित्ताद्यामयाद्भयम् । अस्तीति शेषः । तस्य तदन्तरायत्वादिति भावः ।

कुले सद्वंशे च्युतेराचारभ्रंशाद् भयम्, तस्यास्तदप्रतिष्ठावहत्वादिति भावः। अथवा च्युतेः सन्तानविच्छेदात् भयम्, तस्याः सम्प्रदायोपहतिहेतुत्वादिति भावः। वित्ते द्रव्यसमृद्धौ नृपालात् राज्ञो भयम्, तस्य तदपहर्तृत्वादिति भावः। मानेऽभिमाने दैन्यात् कार्पण्याद् भयम्। तस्य तद्भङ्गहेतुत्वादिति भावः। बले सामर्थ्ये रिपोः शत्रोर्भयम्, तस्य तद्दमनशीलत्वादिति भावः। रूपे सौन्दर्ये जराया वार्धका (वृद्धा) वस्थाया भयम्, तस्यास्तद्विलोपित्वादिति भावः। शास्त्रे वेदान्तादिशास्त्रकलापे वादिभ्यः शुष्कतर्ककलहकण्टकेभ्यो भयम्, तेषां तदपरोक्षकत्वादिति भावः। गुणे विद्याविनयादिगुणगणे खलाद् दुर्जनाद् भयम्, तस्य तद्दूषकत्वादिति भावः। काये देहे कृतान्ताद् यमाद् भयम्, तदन्तकरत्वादिति भावः। 'कायो देहः क्लीबपुंसोः, 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः। सर्वत्र 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात् पञ्चमी। अतो भुवि नृणां सम्बन्धि सर्वं वस्तु भोगाद्यशेषार्थजातं भयान्वितमुक्तरीत्या भयसहितम्, सान्तकत्वात् सापायमित्यर्थः। किन्तु विषयानभिलाषो विरागस्तस्य भावो वैराग्यम्, तदेकमेव, न विद्यते भयं यस्य तदभयं भयहेतुत्वाभावान्निर्भयम्। निरातङ्कत्वान्निरपायमित्यर्थः। अतो विरागा अस्थिरभोगास्तेषां भावो वैराग्यं तदेकमेव न विद्यते भयं यस्य तदभयं भयहेतुत्वाद्यभिनिवेशं परित्यज्य सुस्थिरवैराग्यमेवाश्रयणीयं श्रेयस्कामेनेति भावः। इत्थं भोग इत्यादिष्वधिकरणसप्तम्याश्रयणेन व्याख्यातम्। सति सप्तम्याश्रयणे त्वेवं व्याख्येयम्—अतः सर्वं भुवि नृणां भयान्वितम्, किन्तु वैराग्यमेव न विद्यते भयं यस्मात्तदभयम्। भयनिवारणमित्यर्थः। सति वैराग्ये सर्वस्य मिथ्यात्वेन प्रतीयमानतया द्वितीयाभावात्। अतो भयावहं भोगादिकं परित्यज्य भयापहं वैराग्यमेवाश्रयणीयमिति तात्पर्यम्। शेषं समानम्। शार्दूलविक्रीडितम् ॥ १६ ॥

**भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला**
**आयुर्वायुविघट्टिताब्जपटलीलीनाम्बुवद्भङ्गुरम्।**
**लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं**
**योगे धैर्यसमाधिसिद्धसुलभे बुद्धिं विधध्वं बुधाः ॥ १७ ॥**

भोगा इति। तनुभृतां शरीरिणां भोगाः पूर्वोक्ता मेघवितानस्याभ्रवृन्दस्य मध्ये विलसन्त्यः परिस्फुरन्त्यो याः सौदामिन्यस्तडितस्ता इव चञ्चलाः क्षणिका इत्यर्थः 'तडित्सौदामिनी विद्युत्' इत्यमरः। सुदाम्नाऽद्रिणा एकदिक् सौदामिनीति विग्रहः। 'तेनैकदिक्' इत्यण्। तथाऽयुर्जीवितं च वायुना विघट्टितं तरलितं यदब्जपटलीलीनाम्बु पद्मपत्रप्रान्तसंश्लिष्टजलबिन्दुस्तद्वद्भङ्गुरम्। भङ्गलीलावन्नश्वरमित्यर्थः। तथा यौवनलालसा महाभोगाभिलाषाः। 'कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः, इत्यमरः। लोला अस्थिरा इत्येवमाकलय्यालोच्य हे बुधा द्रुतं शीघ्रमेव विलम्बस्यानवकाशादिति भावः। धार्यं धीरत्वम्, समाधिश्चित्तस्थैर्यम्, तयोः सिद्ध्या निष्पत्त्या सुलभे सुखलभ्ये योगे ब्रह्मध्याने बुद्धिं निश्चयात्मिकां मनीषां विधध्वं कुरुत। ब्रह्मज्ञाननिष्ठा भवतेत्यर्थः। शार्दूलविक्रीडितम् ॥ १७ ॥

अथ सर्वथा यद्यहमदुपदेशे विश्वासस्तर्ह्यात्मन्येव मनः समाधेयम्, न त्वन्यत्रेत्याह—

**भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-**
**स्तत्कस्येह कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ।**
**आशापाशशतोपशान्तिविशदं चेतः समाधीयतां**
**कामोत्पत्तिवशात्स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ १८ ॥**

भोगा इति । भोगा विषया भङ्गुरा भङ्गशीला वृत्तिर्येषां ते तथोक्ताः । आगमापायित्वादस्थिरा इत्यर्थः । बहुविधा नानाप्रकाराश्च, कारणवैचित्र्यपूर्वकत्वात्कार्यवैचित्र्या इति भावः । अस्तु, ततः किम् ? तत्राह—तैर्भोगैरेवायं परिवर्तमानो भावः शरीरधारणादिसंसारः कल्पित इति शेषः । जन्मान्तरीयकृत्वात्तस्येति भावः । 'भोगायतनं शरीरम्' इति वैशेषिकाः । तत्तस्मात् कारणाद् रे लोका जनाः, इहात्र भवे कस्य कृते कस्य भोगस्य प्राप्त्यर्थमित्यर्थः । 'अर्थे कृतेऽथ शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ' इति वचनात् । परिभ्रमत सञ्चरत परिभ्रमितव्यमित्यर्थः, सञ्चितकर्मवशात् स्वत एव तेषां सम्भाव्यमानत्वादिति भावः । अतश्चेष्टितैर्भोगसंग्रहव्यापारैः कृतम्, तत्संग्रहव्यापारा न कर्तव्या इत्यर्थः । कृतमिति निषेधार्थकमव्ययं चादिषु पठ्यते । 'कृतमिति निवारणातिनिषेधयोः' इति गणव्याख्याने । तर्हि किमतः परं कर्तव्यमुपदिश्यत इत्यत आह— अस्मद्वचोऽस्मदीयमुपदेशवचनं श्रद्धेयं यदि विश्वसनीयं चेद् युष्माभिरिति शेषः । आशाऽतितृष्णा तस्याः पाशा रज्जव इव बन्धहेतुत्वात् । 'आशा दिगतितृष्णयोः' इति वैजयन्ती । तेषां शतानि । अनेक आशापाशा इत्यर्थः । तेषामुपशान्त्योपशमनेन विशदं निर्मलं चेतश्चित्तं कामोत्पत्तिवशादनुरागोपवशात् । अनुरागमुत्पाद्येत्यर्थः । स्वरूपमात्मा तद्रूपं धाम स्थानं तस्मिन् 'स्वो ज्ञातावात्मनि स्वम्' इत्यमरः । समाधीयतां स्थिरीक्रियताम् । अन्तरात्मप्रवणमेव क्रियताम्, न बाह्यविषयासक्तमित्यर्थः । अन्यथा तु महाननर्थः स्यादिति भावः । यद्वा स्वशब्देन जीव उच्यते । तस्य धामनि निलयस्थाने परमब्रह्मणि । अथवा स्वधामनि स्वयंज्योतिषि स्वरूपभूततेजसीति वा । इहात्यन्तविकृष्टार्था बहवः परिस्फुरन्ति, विस्तारभयान्न लिख्यन्ते । समाधीयतां समाहितं क्रियतामित्यर्थः । अयमेव हितोपदेष्टृत्वान्मुख्यगुरूणामस्माकं परमोपदेशः । एदद्विश्वासेनान्यासङ्गं परित्यज्य मनो ब्रह्मणि कृत्वा तदाज्ञया श्रेयः सम्पादनीयम् ।

'सत्सम्प्रदायसंयुक्तब्रह्मविद्याविशारदः । एवमादिगुणोपेतो देशिकोऽशेषवन्दितः ॥

इत्युक्तलक्षणदेशिकाचार्योपदेशवचनश्रद्धाभक्तियुक्तस्य श्रेयोलाभावश्यम्भावात् ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भिषजे गुरौ । यादृशी भावना यत्र सिद्धिर्भवति तादृशी ॥

इत्यादिश्रुतिस्मृतिसहस्रेभ्योऽयमर्थो निश्चीयत इत्यलमतिप्रसङ्गेन । शार्दूलविक्रीडितम् ॥ १८ ॥

**रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो**
**धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ।**
**व्यापारैः पुनरुक्तभूतविषयैरित्थंविधेनामुना**
**संसारेण कदर्थिता वयमहो मोहान्न लज्जामहे ॥ १९ ॥**

रात्रिरिति । रात्रिरियं प्रवर्तमाना रजनी सैव पुनः, गतरात्रिसदृश्येवेत्यर्थः । पुनःशब्दो वाक्यालङ्कारे । अथवा रात्रिः पुनर्भूयोऽपि सैव गतरात्रिरेव नैतद्भेदो विज्ञायत इति भावः। तथा दिवसोऽहः पुनः स एव गतदिवससदृश एवेत्यर्थः । पूर्ववद्विकल्पोऽत्राप्युन्नेयः । इति मत्वा बुद्ध्वापि जन्तवः प्राणिन उद्यमिनस्तत्तदर्थसाधनोद्योगवन्तस्तथैव निभृतं निगूढं परेषामप्रकाशमिति यावत् । प्रारब्धा उपक्रान्तास्तत्तत्क्रियास्तत्तदर्थसाधनकर्माणि येषां ते तथोक्ताश्च सन्तः पुनरुक्तभूताः पुनरनुभूतकल्पाः । चर्वितचर्वणप्राया इति यावत् । तथाभूता विषया जग्ध्यादिभोगा येषु तैर्व्यापारैश्चेष्टाभिर्मुधा व्यर्थं धावन्ति वृथा प्रयासमन्तरेण फलान्तरासम्भवादिति भावः। किन्त्विवत्थंविधेनैवंप्रकारेणामुना परिवर्तमानेन संसारेणाकुत्सितोऽर्थः कदर्थः । 'कोःकत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः । कदर्थवन्तः कृताः कदर्थिता निरर्थीकृता अपि । कदर्थशब्दात् 'तत्करोति॰' इति णयन्तात् कर्मणि क्तः । णाविष्ठवद्भावे विन्मतोर्लुक् । वयं मोहादज्ञानान्न लज्जामहे न जिह्नीमः । अहो एवं कालमहिम्ना निःस्सारतिरस्कृता अपि लज्जां न प्राप्नुम इत्याश्चर्यमित्यर्थः ॥ १९ ॥

अथ कालकलनाविपाकवचनमाह—

**वयं येभ्यो जाताश्चिरपरिचिता एव खलु ते**
**समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।**
**इदानीमेते स्मः प्रतिदिवसमासन्नपतना**
**गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ २० ॥**

वयमिति । वयं येभ्यो मातापितृभ्यो जाता उत्पन्नास्ते चिरपरिचिता एव चिरकालपरिचयवन्त एव नष्टा एवेत्यर्थः । खलुशब्दोऽत्र निश्चये वाक्यालङ्कारे वा । तथा यैर्जनैः समं संवृद्धा सम्यग्वृद्धिं गतास्तेऽपि स्मृतिविषयतां स्मरणगोचरत्वं गमिताः कालेनेति शेषः । तेऽपि नष्टा इत्यर्थः । गमेर्णयन्तात् कर्मणि क्तः । 'गतिबुद्धि॰' इत्यादिनाऽणि कर्तुः कर्मणि 'णयन्ते कर्तुश्च कर्मणः' इति वचनात् । अथवा गमिता गता इत्यर्थः । स्वार्थे णिचि 'रामो राज्यमकारयत्' इतिवत् । इदानीं वार्धका ( वृद्धा ) वस्थायामेते वयं प्रतिदिवसं प्रत्यहम् । यथार्थेऽव्ययीभावः । आसन्नं समीपवर्ति पतनं निधनं येषां ते तथोक्ताः । अत एव सिकताऽस्मिन्नस्तीति सिकतिलं सैकतप्रायम् । देशे लुबिलचौ च' इत्यनेन ततस्तस्मिन्नित्यर्थे इलच्प्रत्ययः । यन्नदीतीरं नदीतटप्रदेशस्तत्र ये तरवो वृक्षास्तैस्तुल्यावस्थां गताः समदशां प्राप्ताः स्म । क्षिप्रमेव यास्याम इत्यर्थः । एतत् सर्वं कालकृतमेव, अन्यथा कथमन्यस्येदृक्सामर्थ्यमिति भावः । अत्र तरङ्गभङ्गयाघातैः सिकतापनयेऽविलम्बेन तरूणां निर्मूलोन्मूलः । तद्द्योतनार्थं नदीतीरस्य सिकतिलविशेषणम् ।

'स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।
देश एवादिमावेवमुन्नेयाः सिकतावति ॥' इत्यमरः । शिखरिणी ॥ २० ॥

अथेह कश्चित् कुतश्चिद्भाग्योदयादित्थम्भूतकालवैषम्यं ज्ञात्वा वैराग्याद् यदि यतिर्भवेत्तदा निरपेक्षस्तृणमिव जगज्जालमालोकयन्नवधीरितानुवर्तनेच्छू राज्ञा सह संवादं कर्तुं शक्नुयात्

नान्यथा। अतो निरङ्कुशत्वयतिभावोऽवश्यं सम्भावनीय इति विवेकिनां ज्ञापयितुं तत्संवादप्रकारमाह—

**त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः**
**ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः।**
**इत्थं मानधनातिदूरमुभयोरप्यावयोरन्तरं**
**यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः॥ २१॥**

त्वमिति। त्वम्। रञ्जयतीति राजा महोन्नत इत्यर्थः। वयमप्युपासिताः सेविता गुरुव आचार्या यया सा तथोक्ता। 'आचार्यवान् पुरुषो वेद' इति श्रुतेः। निरन्तरगुरुसेवातत्परेत्यर्थः। यद्वोपासिता गुरूपासनावशात् सम्पादिता गुरुः श्रेष्ठा च या प्रज्ञा त्रैकाल्यगोचरबुद्धिविशेषप्रवृत्तिस्तया योऽभिमान आग्रहस्तेनोन्नता उत्कृष्टाः। त्वं विभवैर्धनसम्पत्तिभिः ख्यातः सर्वत्र प्रसिद्धः। तथा कवयो विद्वांसः, यद्वा विचित्रप्रबन्धवचनरचनाचातुरीधुरीणप्रतिभासम्पन्नाः कवयितारो नोऽस्माकं यशांसि कीर्तीर्दिक्षु दिगन्तरालेषु प्रतन्वन्ति विस्तारयन्ति, एते महान्तः सन्ततपरिचर्याभिनन्दिताचार्यकृपाकटाक्षलब्धप्रज्ञाभिमानमानसमहोत्सवशालिनो ज्ञानविज्ञानसम्पन्ना मोक्षसाम्राज्यपट्टबद्धास्तृणीकृतब्रह्मपुरन्दरा इत्यस्मानपि कीर्तयन्तीत्यर्थः। तस्माद् वयमपि ख्याता एवेति भावः। अत इत्थमनेन प्रकारेण त्वं चाहञ्चावां तयोः। 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषः। उभयोरप्यन्तरम्। तारतम्यं मानधनाभ्यामतिदूरमत्यन्तविप्रकृष्टम्। त्वं केवलं धनवान्, वयं तु प्रज्ञाप्रयुक्ताभिमानधनवन्तः, अतस्तव चास्माकं च सुमेरुसर्षपयोरिव महदन्तरमित्यर्थः। अतस्त्वमस्मासु विषये पराङ्मुखोऽनादरपरोऽसि यदि, तर्हि वयमप्येकान्ततो निःस्पृहा निरपेक्षाः, अनादरपरा इत्यर्थः। त्वयीति शेषः। अनादरे व्यवस्थाने संसारे नास्माकमत्र प्रयोजनमस्ति। तवास्मास्वादरश्चेदस्माकमपि त्वय्यादरः, तद्वशादत्र स्थास्यामः। अन्यथान्यत्र गमिष्याम इति भावः। अत्र 'त्वं राजा वयम्' इत्युपक्रमे 'वयमप्येकान्ततो निःस्पृहाः' इत्युपसंहारे बहुवचनं प्रयुज्य 'आवयोः' इति द्विवचनप्रयोगः कथमुपयुज्यत इति चेत्, सर्वेषां समुदायविवक्षयाऽऽत्मसम्भावनायां बहुवचनप्रयोगेण वा युक्तत्वान्न कोऽपि विरोधः। एवमुत्तरत्रापि द्रष्टव्यम्। शार्दूलविक्रीडितम्॥ २१॥

अथ कथमन्यन्न गमिष्यसीत्याशङ्कायामस्माकं नित्यसन्तुष्टान्तःकरणत्वान्न किञ्चिदपि कृच्छ्रमित्याह—

**वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः**
**सम इव परितोषो निर्विशेषो विशेषः।**
**स तु भवतु दरिद्रो यस्य तृष्णा विशाला**
**मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥ २२॥**

वयमिति। हे राजन्, वयमिहेदानीं वल्कलैर्दारुत्वङ्निर्मितचीवरैः परितुष्टाः सन्तुष्टाः। त्वं दुकूलैः क्षौमैः, विचित्रचीनाम्बरैरित्यर्थः। परितुष्ट इति वचनविपरिणामेन सम्बन्धः। परितोषः सन्तोषोऽस्माकं तव सम इव तुल्य एव, इवशब्दोऽत्रावधारणार्थकः। विशेषोऽन्यतरो-

त्कर्षस्तु निर्विशेषो विशेषरहितः। मामकतावकपरितोषयोरन्तरं न किञ्चिदप्यस्तीत्यर्थः। "सम इव परितोषो जायते को विशेषः" इति वा पाठः। किन्तु यस्य पुंसस्तृष्णा धनलिप्सा विशालाऽत्यायता स पुमान् दरिद्रोऽकिञ्चनो भवतु नान्य इत्यर्थः। सम्भावनायां लोट्। कथमेतदित्याशङ्क्योक्तमर्थमर्थान्तरन्यासेन द्रढयति—मनसि च परितुष्टे येन केनचित् सन्तुष्टे सति कः पुमानर्थवान् द्रव्यसम्पन्नः, कश्च वा दरिद्रो द्रव्यहीनः। न कोऽपीत्यर्थः। मनःपरितोषे लाभालाभयोरकिञ्चित्करत्वादिति भावः। अतो न किञ्चिदप्यस्माकं कृच्छ्रमिति वेदितव्यम्। मालिनीवृत्तम्॥ २२॥

आस्तां तावत् क्षुद्रनृपवार्ता तद्यच्ञापरास्तु ततोऽप्यत्यन्तक्षुद्रा इत्याह—

**मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः**
**स्वांशीकृत्य तमेव सङ्गरशतै राज्ञां गणा भुञ्जते।**
**ते दद्युर्ददतोऽथवा किमपरं क्षुद्रा दरिद्रा भृशं**
**धिग्धिक्तान् पुरुषाधमान्धनकणान्वाञ्छन्ति तेभ्योऽपि ये॥२३॥**

मृत्पिण्ड इति। जलरेखया समुद्राकारजलरेखया जलधारया वलयितो वेष्टितः पुञ्जीकृतश्च योऽयं परिदृश्यमानः सर्वोऽशेषोऽपि मृत्पिण्डश्चाणुर्ननु तं तादृशं मृत्पिण्डमेव सङ्गरशतैर्युद्धशतैः स्वांशीकृत्य स्वभागीकृत्य ये राज्ञां गणा भुञ्जतेऽनुभवन्ति त राजगणा दद्युर्हि अर्थं वितरेयुर्वा। ददातेर्भविष्यति लिङ्। अथवेति पक्षान्तरे। ददतो वितरन्तो वा। ददातेर्वर्तमाने शतृप्रत्ययः। 'नाभ्यस्ताच्छतुः' इति नुमभावः। अपरमन्यद् दुष्करं किमस्ति किमपि नास्त्येवेत्यर्थः। भृशमत्यर्थं क्षुद्रा हीना दरिद्रा दीनाश्च। अनेकसंयुगक्लेशार्जितमृत्पिण्डभोक्तृत्वात् क्षुद्रत्वं तत्राप्यंशभागित्वाद् दरिद्रत्वं चावगन्तव्यम्। ततस्तेभ्यः क्षुद्रदरिद्रेभ्यो राजगणेभ्यो ये पुरुषाधमा धनकणान् धनलेशान् वाञ्छन्त्यभिलषन्ति, धिग्धिक्तान् पुरुषाधमान् मानुषपाशान् धिग् धिक्। कूपराधःप्रसृतजलपातवत्तथाविधक्षुद्रयाच्ञायाः परमनैच्यावहत्वात्तद्याचितारस्ततोऽपि नीचास्ते नराधमाः पौनःपुन्येन निन्द्या इत्यर्थः। 'धिङ् निर्भर्त्सननिन्दयोः' इत्यमरः।

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥'

इति वचनात्पुरुषाधमानिति द्वितीया। वीप्सायां द्विर्भावः। स्वदग्धकुक्षिकुण्डपूरणैकप्रयोजनायाः पुरुषाधमत्वजनन्याः क्षुद्रयाच्ञाया धिक्कारं विधाय स्वतःसिद्धानन्दनिर्व्याकुलस्य पुरुषोत्तमत्वजनकस्य यतिभावस्यैव जीवातुमार्गणं विधेयमिति तात्पर्यम्। शार्दूलविक्रीडितम्॥ २३॥

अथ विशिष्य सम्बोधनप्रकारमेवाह—

**एतस्माद् विरमेन्द्रियार्थगहनादायासकादाश्रय-**
**श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात्।**
**स्वात्मीभावमुपैहि संत्यज निजां कल्लोललोलां गतिं**
**मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना॥ २४॥**

एतस्मादिति। हे चेतः, एतस्मात् परिदृश्यमानात्, आयासयतीत्यायासकाद् दुःखजनकाद्, इन्द्रियार्थाः शब्दादिविषया एव गहनमरण्यं तस्माद् दुर्विगाहत्वादेतद्रूपणम् (रूपिणः)। विरम

विरामं प्राप्नुहि । अत्यन्तदुःखविषयासक्तिं मा कुर्वित्यर्थः । 'जुगुप्साविराम०' इत्यादिना पञ्चमी । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । किन्तु क्षणात् क्षणमात्रेणैवाशेषदुःखशमनमेकविंशतिमहादुःखविध्वंसनमेव व्यापारस्तत्र दक्षं समर्थं श्रेयोमार्गं ज्ञानमार्गमाश्रयानुसर । तत्र प्रवर्तस्वेत्यर्थः । तथा स्वात्मीभावं स्वरूपानुसन्धानतत्परत्वमुपैहि प्राप्नुहि । तथा निजां स्वकीयाम् 'चञ्चलं हि मनः कृष्ण' इत्यादौ प्रसिद्धामित्यर्थः । कल्लोलवत् लोलामतिचपलां गतिं व्यापारं संत्यज सम्यग् विसृज्य सुस्थिरं भवेत्यर्थः । भूयः पुनरपि भङ्गुरां भङ्गशीलामशाश्वतीं भवरतिं संसारासक्तिं मा भज मा सेवस्व । किं त्वधुनेदानीं प्रसीद प्रसन्नं भव, चित्तप्रसादमन्तरा पुण्यशतैरपि श्रेयःप्राप्त्यसम्भवादिति भावः । शार्दूलविक्रीडितम् ॥ २४ ॥

अथ विचार्यमाणे सम्पत्तिलाभशत्रुजयादीनामप्यकिञ्चित्करत्वमेवेत्याह—

**प्राप्ताः श्रियः सकलकामदुघास्ततः किं**
**न्यस्तं पदं शिरसि विद्विषतां ततः किम् ।**
**सम्पादिताः प्रणयिनो विभवैस्ततः किं**
**कल्पस्थितास्तनुभृतां तनवस्ततः किम् ॥ २५ ॥**

प्राप्ता इति । चेतः ! तनुभृतां शरीरिणां सकलकामान् दुहन्तीति सकलकामदुघाः अशेषमनोरथपरिपूरिका इत्यर्थः । श्रियः प्राप्तास्ततः किम् । तथा विद्विषताममित्राणाम् । 'द्विषोऽमित्रे' इति शतृप्रत्ययः । शिरसि पदं न्यस्तं निक्षिप्तम् । पराक्रमातिशयेन सर्वे शत्रवः पादाक्रान्तीकृता इत्यर्थः, ततः किम् । विभवैर्धनैः प्रणयिनः सुहृदः सम्पादिताः सङ्गृहीता वशंवदीकृता इत्यर्थः । 'सम्मानिताः' इति पाठे बहुमानिताः । ततः किम् । तथा कल्पस्थिताः कल्पान्तरस्थायिन्य इत्यर्थः । तनवः शरीराणि सम्पादिता इति सम्बन्धः । केनचिद् योगेन सङ्गृहीताः । ततः किम् । तेषां श्रेयःसाधनत्वनिषेधादिति भावः । वसन्ततिलकावृत्तम् ॥ २५ ॥

अथ वेदाध्ययनस्मृतिपर्यालोचनशास्त्रपठनपुराणश्रवणादिभिर्न कोऽपि लाभः । किन्तु विचाराच्छ्रवणमनननिदिध्यासनादिभिरात्मानुभव एव लाभ इति मत्वा जनानुद्दिश्य बोधयति—

**किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः**
**स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।**
**मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं**
**स्वात्मानन्दपदप्रवेशकलनं शेषैर्वणिग्वृत्तिभिः ॥ २६ ॥**

किं वेदैरिति । वेदैर्ऋग्यजुःसामाथर्वणसञ्ज्ञकैश्चतुर्भिर्वेदैः किं प्रयोजनं न किमपि प्रयोजनमित्यर्थः । स्मृतिभिर्मन्वाद्यष्टादशस्मृतिभिरुपस्मृतिभिश्च किं प्रयोजनं न किमपीत्यर्थः । पुराणपठनैर्ब्रह्माण्डपुराणाद्यष्टादशपुराणोपपुराणपठनैश्च किम् । न किमपीत्यर्थः । महाविस्तृतैरतिविस्तृतैः शास्त्रैस्तर्कव्याकरणादिषड्दर्शनैः किम् । न किमपीत्यर्थः । स्वर्गे सर्वपुण्यकृन्निवासे नाकलोके च ग्रामेषु ब्राह्मणप्रधानवर्णानां निवासेषु कुटीषु पर्णगृहेषु यो निवासस्तेन फलदैः फलप्रदैः कर्मणां स्नानसन्ध्यावन्दनोपासनयज्ञादीनां क्रियाभिर्व्यापारैर्विभ्रमैश्च न किमपि प्रयोजनम् ।

भवाज्जननमरणरूपसंसारात् यद्दुःखं दारिद्र्यं भार्यापुत्रादिनाशस्य भारोऽसह्यातिशयस्तस्य रचना तस्या विध्वंसे कालानलं प्रलयाग्निरूपं स्वस्यात्मानन्द आत्मसुखानुभवस्तस्य पदं स्थानं तस्मिन् प्रवेशस्तस्य कलनमेकम् । 'एके मुख्यान्यकेवलाः' इत्यमरः । मुक्त्वा विहाय शेषैरुक्तेभ्योऽन्यैर्वणिग्वृत्तिभिर्वर्तकव्यापारसदृशैर्न किमपि प्रयोजनम् । आत्मज्ञानं विनोक्तानां वेदादीनामध्ययनादिभिरपि फलं नास्तीत्यर्थः । सर्वेषां वेदान्तवाक्यानामद्वैते ब्रह्मणि तात्पर्यमित्युक्तरीत्या ब्रह्मज्ञानमेव सम्पादनीयं न त्वितरदित्याशयः । शार्दूलविक्रीडितम् ॥ २६ ॥

अथ शरीरिणो जरया दुरवस्थामाह—

**गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-**
**र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।**
**वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते**
**हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ २७ ॥**

गात्रमिति । गात्रं शरीरं सङ्कुचितं भुग्नम् अभूदिति शेषः । गतिः सञ्चारोऽपि गलिता सञ्चारशक्तिरपि नष्टेत्यर्थः । दन्तावलिर्दन्तपङ्क्तिश्च भ्रष्टा पतिता । दृष्टिश्चक्षुरिन्द्रियं च नश्यति अर्थग्रहणापटुर्भवतीत्यर्थः । बधिरता श्रोत्रेन्द्रियापाटवं वृद्धिं प्राप्नोति । वक्त्रं च लाला दन्तान्तर्गतजलं लालेवाचरति लालायते लालामयं भवतीत्यर्थः । 'सृणिका स्यन्दनी लाला' इत्यमरः । तथा बन्धव एव बान्धवाः । स्वार्थेऽण्प्रत्ययः । त एव जनो बन्धुवर्गश्च वाक्यं वचनं नाद्रियते न रोचयत इत्यर्थः । किं बहुना भार्याऽपि न शुश्रूषते न सेवते । यद्वा सेवितुं नेच्छति सेवा दुरापास्तेति भावः : अतो जीर्णवयसो जरावस्थासम्पन्नस्य पुरुषस्य । हेति विषादे । कष्टं कृच्छ्रम् । कुतः ? पुत्रोऽप्यात्मसम्भवोऽपि अमित्रायत अमित्रः शत्रुरिवाचरति । प्रतिकूलाचरणतत्परो भवतीत्यर्थः । लालायत इत्यत्र 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । अत्र तु 'उपमानादाचारे' इत्युभयत्रापि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः । शार्दूलविक्रीडितम् ॥ २७ ॥

अथ तपसः श्रेयोहेतुत्वे तदाचरणस्य किं वा योग्यस्थानमित्याशङ्कायामाह—

**माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि**
**क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।**
**युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-**
**पूतग्रावगिरीन्द्रकन्दरतटीकुञ्जे निवासः क्वचित् ॥२८॥**

मान इति । मानेऽभिमाने म्लायिनि भग्ने सति । तथा वसुनि धने च खण्डिते विनष्टे सति । 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इति विश्वः । अतः एवार्थिनि याचके व्यर्थेऽलब्धमनोरथत्वान्निरर्थके प्रयाते सति वाञ्छितार्थालाभाद् वैमुख्यं गते सतीत्यर्थः । बन्धुजने पुत्रपित्रादिबन्धुजनसमूहे क्षीणेऽन्नाद्यलाभात्कृशे सति । परिजने भृत्यवर्गे गते वेतनदानाभावादन्यत्र गते सति । तथा शनैर्मन्दं यौवने तारुण्ये नष्टे गलिते सति । अनित्यस्वाभाव्यात् सर्वस्मिन् विपन्ने सतीत्यर्थः, सुधियां बुद्धिसम्पन्नानामेतदेवेदमेवैकं केवलमत्यन्तं युक्तमुचितम् । किमेतदित्यत आह—

क्वचित् कस्मिंश्चिज् जह्नुकन्यापयःपूता गङ्गाजलपवित्रा ग्रावाणः पाषाणा अस्मिन् स तथोक्तो यो गिरीन्द्रस्तस्य कन्दरतट्यां हिमवद्गिरेर्विहारस्थल्यां कुञ्जो लतामण्डपस्तस्मिन्निवास इति यत्तदेतद् युक्तमिति सम्बन्धः। तस्यैव श्रेयःसाधनभूततपोयोग्यस्थलत्वादिति भावः। 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। शार्दूलविक्रीडितम् ॥ २८ ॥

अथ वैराग्यप्रकारमाह—

**मातर्लक्ष्मि ! भजस्व कञ्चिदपरं मत्काङ्क्षिणी मा स्म भू-**
**र्भोगेषु स्पृहयालवस्तव वशे का निःस्पृहाणामसि ।**
**सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृतै-**
**र्भिक्षावस्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे ॥२९॥**

मातरिति। मातर्जननि हे लक्ष्मि ! 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः। अत्र मातृग्रहण-मेतावन्तं कालं त्वया रक्षिता वयमिति भक्त्यतिशयसूचनार्थमित्यवगन्तव्यम्। अपरमन्यं कञ्चिद् भाग्यवन्तं पुरुषं भजस्व सेवस्व। मत्काङ्क्षिणी मद्विषयाभिलाषिणी मा स्म भूः। मा भवेत्यर्थः। 'स्मोत्तरे लङ् च' इति चकारादाशीरर्थे लुङ्। 'न माङ्योगे' इत्यडागमप्रतिषेधः। नन्विदानीं कुत एतद् वैराग्यमित्यत आहुः। भोगेषु स्रक्चन्दनादिविषयानुभवेषु स्पृहयालवः स्पृहावन्तः पुमांसः। 'स्पृहि०' इत्यादिना चुरादीदन्तात्ण्यन्तादालुच्प्रत्ययः। तव वशे त्वदायत्ततायां वर्तन्त इति शेषः। त्वदधीना भवन्तीत्यर्थः। 'वश आयत्ततायां च' इत्यमरः। तर्हि यूयं क? इत्याशङ्कायामाहुः--निःस्पृहाणां भोगाभिलाषशून्यानां कासि कीदृग्विधासि न काप्यसीत्यर्थः। वयं च निःस्पृहा इति भावः। अतोऽस्मान् विहायान्यत्र गच्छेति सम्बन्धः। नन्वेवं चेद् युष्माकं कथं जीविकेत्याशङ्कायामाहुः--वयं सम्प्रतीदानीं सद्यस्तत्काल एव 'सद्यः परुत्परारि०' इत्यादिना निपातनात्साधुः। स्यूता विरचिता। कर्मणि क्तः। 'च्छ्वोः शूडनुनासिके च' इत्यूठि यणादेशः। पलाशपत्रपुटिका किंशुकपर्णपुटिकैव पात्रं भिक्षाहरणोचितभाजनं तस्मिन् पवित्रीकृतैः पावनीभूतैरित्यर्थः। अभूततद्भावे च्विः। 'अस्य च्वौ' इतीकारः। भिक्षावस्तुभिरन्नकवलशाका-दिभिक्षाद्रव्यैरेव। 'भिक्षासक्तुभिः' इति पाठे भिक्षासक्तुविशेषैरित्यर्थः। वृत्तिं जीविकां समीहा-महेऽभिलषामहे विरक्ता भवाम इत्यर्थः। अतः किमर्थं त्वमस्माकमिति भावः। अत्र पलाशपत्र-पुटिकायाः सद्यःस्यूतत्वकथनमविशदत्वद्योतनार्थम्। अन्यथा भिक्षाहरणानुपयुक्ता स्यादिति वेदितव्यम्। तथा 'पलाशं पद्मपत्रं च' इत्यादिवचनात्पवित्रीकरणयोग्येषु पलाशपत्रेषु निक्षिप्तसाधारणान्नादीनामपि पवित्रत्वम्, किमुत निसर्गशुचिभिक्षावस्तूनामिति चावगन्तव्यम्। शार्दूलविक्रीडितम् ॥ २९ ॥

अथ योगिनः सार्वभौमसाम्यमाह--

**महाशय्या पृथ्वी विपुलमुपधानं भुजलता**
**वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।**
**शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः**
**सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥३०॥**

महाशय्येति । पृथ्वी भूमिर्महाशय्या विशङ्कटपर्यङ्कः । पृथुरेव पृथ्वी । 'वोतो गुणवचनात्' इति ङीप् । मही शय्या । 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही' इत्यमरः । भुजलता बाहुवल्ली विपुलं विस्तीर्णमुपधानम् । 'उपधानन्तूपबर्हः' इत्यमरः । आकाशं च वितानमुल्लोचः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । अयं प्रवर्तमानः अनुकूलोऽनिलः पवनो व्यजनम् । तालवृन्तकमित्यर्थः । 'व्यजनं तालवृन्तकम्' इत्यमरः । शरच्चन्द्रो दीपः, शरद्ग्रहणं चन्द्रस्य प्रकाशातिशयद्योतनार्थम् । इत्येतत्सर्वमयत्नसिद्धम् , अपरिच्छिन्नं चेत्यर्थः । प्रसिद्धं तु नैवंभूतमिति भावः । स्वयं विरतिर्विरक्तिस्तस्याः सङ्गेन मुदितः सन्तुष्टः, अत एव सुखी आनन्दपूर्णः शान्तः शमशीलो मुनिः ।

निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः । ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥'

इत्युक्तलक्षणः कश्चिद् योगीश्वरः । अतनुभूतिरखण्डितैश्वर्यसम्पन्नो नृपः सार्वभौम इव शेते स्वपिति निरातङ्कं निद्रातीत्यर्थः । रूपकसङ्कीर्णोऽयमुपमालङ्कारः । तथोपमानान्नृपादुपमेयस्य मुनेरपरिच्छिन्नशय्यादिसम्पन्नत्वेनाधिक्यप्रतीतेर्व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । शिखरिणी ॥ ३० ॥

अथ योगिस्वरूपं निरूपयति—

**भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा**
**हानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।**
**रथ्याकीर्णविशीर्णजीर्णवसनः सम्प्राप्तकन्थासनो**
**निर्मानो निरहङ्कृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ३१ ॥**

भिक्षेति । भिक्षामश्नातीति भिक्षाशी । भिक्षान्नमात्रभोजनेन शरीरधारणतत्पर इत्यर्थः । जनमध्ये सङ्गरहित आसक्तिविहीनः । 'सङ्गात् सञ्जायते कामः' इत्यादिस्मृतेः तस्य निधानत्वादिति भावः । किन्तु सदा सर्वदा स्वायत्ता स्वाधीना चेष्टा व्यापारो यस्य स तथोक्तः स्वच्छन्दविहारनिरत इत्यर्थः । स्वाधीनात्मीयव्यापारो वा । 'अधीनो निघ्न आयत्तः' इत्यमरः । तथा हानादानयोस्त्यागस्वीकारयोर्विरक्तोऽसङ्कीर्णो यो मार्गस्तत्र निरत आसक्तः । नियमेन हेयवस्तुहानोपादेयवस्तूपादानतत्पर इत्यर्थः । यद्वा हानम् 'इदं हेयम्' इति त्यागः, आदानम् 'इदमुपादेयम्' इति स्वीकारः । हेयोपादेयबुद्धिशून्य इत्यर्थः । 'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः' इत्यादिवचनात्तस्य विधिनिषेधातीतत्वादिति भावः । तथा रथ्यायां वीथ्यां कीर्णमनुपयुक्तत्वाज्जनैर्विक्षिप्तम् । कुतः ? विशीर्णं विशकलितम् । तत्कुतः ? जीर्णं पुरातनं तथाभूतं वसनमाच्छादनं यस्य स रथ्याकीर्णविशीर्णजीर्णवसनः । 'चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम्' इत्यादिना तस्य तथाविधवसनधारणस्वाभाव्यादिति भावः । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः । अर्शआदिराकृतिगणः । यद्वा रथ्यायां कीर्णमनादरेण विक्षिप्तं विशीर्णं जीर्णं च वसनं निजाच्छादनं येन स तथोक्तः । सम्प्राप्तं समधिष्ठितं कन्थैवासनं येन स तथोक्तः । चतुर्गुणितकन्थोपर्युपविष्ट इत्यर्थः । अत एव निर्मानोऽभिमानशून्यः । निरहङ्कृतिरहङ्कारशून्यः । तादात्म्याध्यासरहित इत्यर्थः । शमो नाम वैराग्येण निर्विकारचित्तत्वं तेन यः सुखाभोग आनन्दातिशयस्तत्रैकं मुख्यं यथा तथा बद्धा स्पृहा

येन स तथोक्तः । ब्रह्मध्याननिष्ठ इत्यर्थः । कश्चित् कोऽपि तपस्वी महातपा योगीश्वरः प्रशंसायामिनिः, स्थितो निरातङ्क वर्तत इति भावः । रथ्याकीर्णेति संप्राप्तेति च विशेषणद्वयेन बाह्यवैराग्यमित्यवगन्तव्यम् । स्वभावोक्तिरलङ्कारः 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति लक्षणात् । शार्दूलविक्रीडितम् ॥ ३१ ॥

अथ केवलं सर्वसङ्गपरित्यागमाह—

**पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं**
**विस्तीर्णं वस्त्रमाशादशकमचपलं तल्पमस्वल्पमुर्वी ।**
**येषां निःसङ्गताङ्गीकरणपरिणतस्वान्तसन्तोषिणस्ते**
**धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ३२ ॥**

पाणिरिति । पाणिर्हस्त एव पवित्रं परिशुद्धं पात्रं भाजनम् । 'भोग्यभाजनयोः पात्रम्' इत्यमरः । भ्रमणेन सञ्चारेण परिगतं प्राप्तं भैक्षं भिक्षाकदम्बकमक्षय्यं नाशरहितमन्नमशनम् । आशानां दिशां दशकं दश विस्तीर्णं विशालं वस्त्रं वासः । उर्वी भूमिरस्वल्पं महत्, अचपलमचञ्चलं तल्पं शय्या येषां निसङ्गतायाः सङ्गरहित (त्व) स्याङ्गीकरणेन परिणतं परिपक्वतां गतं यत् स्वान्तं तेन सन्तोषिणः सन्तुष्टास्ते धन्याः संन्यस्तास्त्यक्ता दैन्यस्य व्यतिकरनिकरा यैस्ते तथोक्ताः सन्तः कर्म निर्मूलयन्ति नाशयन्ति । एवं च यत्र कुत्र वा वसन् पाणिपात्रेण भैक्षान्नं भुक्त्वा दिगम्बर उर्वीशयनो निःसङ्गपरिणतचित्तेन सन्तुष्टः सन् त्यक्तदैन्यव्यतिकरनिकरो धन्यो धारावाहिकजन्मपरम्पराप्रदं कर्म निर्मूलयतीत्यभिप्रायः । स्रग्धरा ॥ ३२ ॥

॥ इति श्रीमहाकविभर्तृहरिविरचिते वैराग्यशतके प्रकीर्णाः श्लोकाः ॥

---

*Printed by L. Dhanpat Rai Sethi, Manager,*
*at the Vishveshvaranand Vedic Press,*
*17, Maclagan Road, Lahore & Published by*
*Dewan Bahadur S. P. Singha, M. A., LL. B., M. L. A., Registrar,*
*University of the Panjab, Kacheri Road, Lahore.*

